योषितां किमदेयं हि प्रियाणामुचितागमे ।
स कदाचिद्दशरथो मृगयाशीलिभिर्वृतः ॥ ३३ ॥
अटन्नरण्ये शर्वर्यां वारिबन्धमथाकरोत् ।
सप्तव्यसनहीनेन भवितव्यं तु भूभुजा ॥ ३४ ॥
इति जानन्नपि च तच्चकार तु विधेर्वशात् ।
गर्तं प्रविश्य पानार्थमागतान्निशितैः शरैः ॥ ३५ ॥
मृगान्हन्ति महाबाहुः शृणु कालविपर्ययम् ।
गर्तं प्रविष्टे नृपतौ तस्मिन्नेव नगोत्तमे ॥ ३६ ॥
वृद्धो वै श्रवणो नाम न शृणोति न पश्यति ।
तस्य भार्या तथाभूता तावन्नूतां तदा सुतम् ॥ ३७ ॥

मातापितरावूचतुः ।

आवां तृषार्तौ रात्रिश्च कृष्णा चापि प्रवर्तते ।
वृद्धानां जीवितं कृत्स्नं बालस्त्वमसि पुत्रक ॥ ३८ ॥
अन्धानां बधिराणां च वृद्धानां धिक्च जीवितम् ।
जराजर्जरदेहानां धिग्धिक्पुत्रक जीवितम् ॥ ३९ ॥
तावत्पुंभिर्जीवितव्यं यावल्लक्ष्मीर्दृढं वपुः ।
यावदाज्ञाऽप्रतिहता तीर्थादावन्यथा मृतिः ॥ ४० ॥

ब्रह्मोवाच ।

इत्येतद्वचनं श्रुत्वा वृद्धयोर्गुरुवत्सलः ।
पुत्रः प्रोवाच तद्दुःखं गिरा मधुरया हरन् ॥ ४१ ॥

पुत्र उवाच ।

मयि जीवति किं नाम युवयोर्दुःखमीदृशम् ।
न हरत्यात्मजः पित्रोर्यश्चरित्रैर्मनोरुजम् ॥ ४२ ॥
तेन किं तनुजेनेह कुलोद्वेगविधायिना ॥ ४३ ॥

ब्रह्मोवाच ।

इत्युक्त्वा पितरौ नत्वा तावाश्वास्य महामनाः ।
तरुस्कन्धे समारोप्य वृद्धौ च पितरौ तदा ॥ ४४ ॥
हस्ते गृहीत्वा कलशं जगाम ऋषिपुत्रकः ।
स ऋषिर्न तु राजानं जानाति नृपतिर्द्विजम् ॥ ४५ ॥
उभौ सरभसौ तत्र द्विजो वारि समाविशत् ।
सत्वरं कलशे न्युब्जे वारि गृह्णन्तमाशुगैः ॥ ४६ ॥
द्विजं राजा द्विपं मत्वा विव्याध निशितैः शरैः ।
वनद्विपोऽपि भूपानामवध्यस्तद्विदन्नपि ॥ ४७ ॥
विव्याध तं नृपः कुर्यान्न किं किं विधिवञ्चितः ।
स विद्धो मर्मदेशे तु दुःखितो वाक्यमब्रवीत् ॥ ४८ ॥

द्विज उवाच ।

केनेदं दुःखदं कर्म कृतं सद्ब्राह्मणस्य मे ।
मैत्रो ब्राह्मण इत्युक्तो नापराधोऽस्ति कश्चन ॥ ४९ ॥

ब्रह्मोवाच ।

तदेतद्वचनं श्रुत्वा मुनेरार्तस्य भूपतिः ।
निश्चेष्टश्च निरुत्साहो शनैस्तं देशमभ्यगात् ॥ ५० ॥

तं तु दृष्ट्वा द्विजवरं ज्वलन्तमिव तेजसा।
असावप्यभवत्तत्र सशल्य इव मूर्छितः ॥ ५१ ॥
आत्मानमात्मना कृत्वा स्थिरं राजाऽब्रवीदिदम् ॥ ५२ ॥

राजोवाच।

को भवान्द्विजशार्दूल किमर्थमिह चाऽऽगतः।
वद पापकृते मह्यं वद मे निष्कृतिं पराम् ॥ ५३ ॥
ब्रह्महा वर्णिभिः किंतु श्वपचैरपि जातुचित्।
न स्प्रष्टव्यो महाबुद्धे द्रष्टव्यो न कदाचन ॥ ५४ ॥

ब्रह्मोवाच।

तद्राजवचनं श्रुत्वा मुनिपुत्रोऽब्रवीद्वचः ॥ ५५ ॥

मुनिपुत्र उवाच।

उत्क्रमिष्यन्ति मे प्राणा अतो वक्ष्यामि किंचन।
स्वच्छन्दवृत्तिताज्ञाने विद्धि पाकं च कर्मणाम् ॥ ५६ ॥
आत्मार्थं तु न शोचामि वृद्धौ तु पितरौ मम।
तयोः शुश्रूषकः कः स्यादन्धयोरेकपुत्रयोः ॥ ५७ ॥
विना मया महारण्ये कथं तौ जीवयिष्यतः।
ममाभाग्यमहो कीदृक्पितृशुश्रूषणे क्षतिः ॥ ५८ ॥
जाता मेऽद्य विना प्राणैर्हा विधे किं कृतं त्वया।
तथाऽपि गच्छ तत्र त्वं गृहीतकलशस्त्वरन् ॥ ५९ ॥
ताभ्यां देह्युदपानं त्वं यथा तौ न मरिष्यतः ॥ ६० ॥

ब्रह्मोवाच।

इत्येवं ब्रुवतस्तस्य गताः प्राणा महावने।
विसृज्य सशरं चापमादाय कलशं नृपः ॥ ६१ ॥

तत्रागात्स तु वेगेन यत्र वृद्धौ महावने।
वृद्धौ चापि तदा रात्रौ तावन्योन्यं समूचतुः ॥ ६२ ॥

वृद्धावूचतुः।

उद्विग्नः कुपितो वा स्यादथ वा भक्षितः कथम्।
न प्राप्तश्चाऽऽवयोर्यष्टिः किं कुर्मः का गतिर्भवेत् ॥ ६३ ॥
न कोऽपि तादृशः पुत्रो विद्यते सचराचरे।
यः पित्रोरन्यथा वाक्यं न करोत्यपि निन्दितः ६४ ॥
वज्रादपि कठोरं वा जीवितं तमपश्यतोः।
शीघ्रं न यान्ति यत्प्राणास्तदेकायत्तजीवयोः ॥ ६५ ॥

ब्रह्मोवाच।

एवं बहुविधा वाचो वृद्धयोर्वदतोर्वने।
तदा दशरथो राजा शनैस्तं देशमभ्यगात् ॥ ६६ ॥
पादसंचारशब्देन मेनाते सुतमागतम् ॥ ६७ ॥

वृद्धावूचतुः।

कुतो वत्स चिरात्प्राप्तस्त्वं दृष्टिस्त्वं परायणम्।
न ब्रूषे किंतु रुष्टोऽसि वृद्धयोरन्धयोः सुतः ॥ ६८ ॥

ब्रह्मोवाच।

सशल्य इव दुःखार्तः शोचन्दुष्कृतमात्मनः।
स भीत इव राजेन्द्रस्तावुवाचाथ नारद ॥ ६९ ॥
उदपानं च कुरुतां तच्छ्रुत्वा नृपभाषितम्।
नायं वक्ता सुतोऽस्माकं को भवांस्तत्पुरा वद ॥ ७० ॥
पश्चात्पिबावः पानीयं ततो राजाऽब्रवीच्च तौ ॥ ७१ ॥

राजोवाच ।

तत्र तिष्ठति वां पुत्रो यत्र वारिसमाश्रयः ॥ ७२ ॥

ब्रह्मोवाच ।

तच्छ्रुत्वोचतुरार्तौ तौ सत्यं ब्रूहि न चान्यथा ।
आचचक्षे ततो राजा सर्वमेव यथातथम् ॥ ७३ ॥
ततस्तु पतितौ वृद्धौ तत्राऽऽवां नय मा स्पृश ।
ब्रह्मघ्नस्पर्शनं पापं न कदाचिद्विनश्यति ॥ ७४ ॥
निन्ये वै श्रवणं वृद्धं सभार्यं नृपसत्तमः ।
यत्रासौ पतितः पुत्रस्तं स्पृष्ट्वा तौ विलेपतुः ॥ ७५ ॥

वृद्धावूचतुः ।

यथा पुत्रवियोगेन मृत्युर्नौ विहितस्तथा ।
त्वं चापि पाप पुत्रस्य वियोगान्मृत्युमाप्स्यसि ॥ ७६ ॥

ब्रह्मोवाच ।

एवं तु जल्पतोर्ब्रह्मन्गताः प्राणास्ततो नृपः ।
अग्निना योजयामास वृद्धौ च ऋषिपुत्रकम् ॥ ७७ ॥
ततो जगाम नगरं दुःखितो नृपतिर्मुने ।
वसिष्ठाय च तत्सर्वं न्यवेदयदशेषतः ॥ ७८ ॥
नृपाणां सूर्यवंश्यानां वसिष्ठो हि परा गतिः ।
वसिष्ठोऽपि द्विजश्रेष्ठैः संमन्त्र्याऽऽह च निष्कृतिम् ॥ ७९ ॥

वसिष्ठ उवाच ।

गालवं वामदेवं च जाबालिमथ कश्यपम् ।
एतानन्यान्समाहूय हयमेधाय यत्नतः ॥ ८० ॥
यजस्व हयमेधैश्च बहुभिर्बहुदक्षिणैः ॥ ८१ ॥

ब्रह्मोवाच ।

अकरोद्धयमेधांश्च राजा दशरथो द्विजैः ।
एतस्मिन्नन्तरे तत्र वागुवाचाशरीरिणी ॥ ८२ ॥

आकाशवाण्युवाच ।

पूतं शरीरमभवद्राज्ञो दशरथस्य हि ।
व्यवहार्यश्च भविता भविष्यन्ति तथा सुताः ॥
ज्येष्ठपुत्रप्रसादेन राजाऽपापो भविष्यति ॥ ८३ ॥

ब्रह्मोवाच ।

ततो बहुतिथे काले ऋष्यशृङ्गान्मुनीश्वरात् ।
देवानां कार्यसिध्द्यर्थं सुता आसन्सुरोपमाः ॥ ८४ ॥
कौशल्यायां तथा रामः सुमित्रायां च लक्ष्मणः ।
शत्रुघ्नश्चापि कैकेय्यां भरतो मतिमत्तरः ॥ ८५ ॥
ते सर्वे मतिमन्तश्च प्रिया राज्ञो वशे स्थिताः ।
तं राजानमृषिः प्राप्य विश्वामित्रः प्रजापतिः ॥ ८६ ॥
रामं च लक्ष्मणं चापि अयाचत महामते ।
यज्ञसंरक्षणार्थाय ज्ञाततन्महिमा मुनिः ॥ ८७ ॥
चिरप्राप्तसुतो वृद्धो राजा नैवेत्यभाषत ॥ ८८ ॥

राजोवाच ।

महता दैवयोगेन कथंचिद्वार्धके मुने ।
जातावानन्दसंदोहदायकौ मम बालकौ ॥ ८९ ॥
सशरीरमिदं राज्यं दास्ये नैव सुताविमौ ॥ ९० ॥

ब्रह्मोवाच ।

वसिष्ठेन तदा प्रोक्तो राजा दशरथस्त्विति ॥ ६१ ॥

वसिष्ठ उवाच ।

रघवः प्रार्थनाभङ्गं न राजन्कापि शिक्षिताः ॥ ६२ ॥

ब्रह्मोवाच ।

रामं च लक्ष्मणं चैव कथंचिद्वदन्नृपः ॥ ६३ ॥

राजोवाच ।

विश्वामित्रस्य ब्रह्मषः कुरुतां(तं) यज्ञरक्षणम् ॥ ६४ ॥

ब्रह्मोवाच ।

वदन्निति सुतौ सोष्णं निश्वसन्ग्लपिताधरः ।
पुत्रौ समर्पयामास विश्वामित्रस्य शास्त्रकृत् ॥ ६५ ॥
तथेत्युक्त्वा दशरथं नमस्य च पुनः पुनः ।
जग्मतू रक्षणार्थाय विश्वामित्रेण तौ मुदा ॥ ६६ ॥
ततः प्रहृष्टः स मुनिर्मुदा प्रादात्तदोभयोः ।
माहेश्वरीं महाविद्यां धनुर्विद्यापुरःसराम् ॥ ६७ ॥
शास्त्रीमास्त्रीं लौकिकीं च रथविद्यां गजोद्भवाम् ।
अश्वविद्यां गदाविद्यां मन्त्राह्वानविसर्जने ॥ ६८ ॥
सर्वविद्यामथावाप्य उभौ तौ रामलक्ष्मणौ ।
वनौकसां हितार्थाय जघ्नतुस्ताटकां वने ॥ ६९ ॥
अहल्यां शापनिर्मुक्तां पादस्पर्शाच्च चक्रतुः ।
यज्ञविध्वंसनायाताञ्जघ्नतुस्तत्र राक्षसान् ॥ १०० ॥

कृतविद्यौ धनुष्पाणी चक्रतुर्यज्ञरक्षणम् ।
ततो महामखे वृत्ते विश्वामित्रो मुनीश्वरः ॥ १०१ ॥
पुत्राभ्यां सहितो राज्ञो जनकं द्रष्टुमभ्यगात् ।
चित्रामदर्शयत्तत्र राजमध्ये नृपात्मजः ॥ १०२ ॥
रामः सौमित्रिसहितो धनुर्विद्यां गुरोर्मताम् ।
तत्प्रीतो जनकः प्रादात्सीतां लक्ष्मीमयोनिजाम् ॥ १०३ ॥
तथैव लक्ष्मणस्यापि भरतस्यानुजस्य च ।
शत्रुघ्नभरतादीनां वसिष्ठादिमते स्थितः ॥ १०४ ॥
राजा दशरथः श्रीमान्विवाहमकरोन्मुने ।
ततो वहुतिथे काले राज्यं तस्य प्रयच्छति ॥ १०५ ॥
नृपतौ सर्वलोकानामनुमत्या गुरोरपि ।
मन्थरात्मकदुर्दैवप्रेरिता मत्सराकुला ॥ १०६ ॥
कैकेयी विघ्नमातस्थे वनप्रवाजनं तथा ।
भरतस्य च तद्राज्यं राजा नैव च दत्तवान् ॥ १०७ ॥
पितरं सत्यवाक्यं तं कुर्वन्रामो महावनम् ।
विवेश सीतया सार्धं तथा सौमित्रिणा सह ॥ १०८ ॥
सतां च मानसं शुद्धं स विवेश स्वकैर्गुणैः ।
तस्मिन्विनिर्गते रामे वनवासाय दीक्षिते ॥ १०९ ॥
समं लक्ष्मणसीताभ्यां राज्यतृष्णाविवर्जिते ।
तं रामं चापि सौमित्रिं सीतां च गुणशालिनीम् ॥ ११० ॥
दुःखेन महताऽऽविष्टो ब्रह्मशापं च संस्मरन् ।
तदा दशरथो राजा प्राणांस्तत्याज दुःखितः ॥ १११ ॥

कृतकर्मविपाकेन राजा नीतो यमानुगैः ।
तस्मै राज्ञे महाप्राज्ञ यावत्स्थावरजङ्गमे ॥ ११२ ॥
यमसद्मन्यनेकानि तामिस्रादीनि नारद ।
नरकाण्यथ घोराणि भीषणानि बहूनि च ॥ ११३ ॥
तत्र क्षिप्तस्तदा राजा नरकेषु पृथक्पृथक् ।
पच्यते छिद्यते राजा पिष्यते चूर्ण्यते तथा ॥ ११४ ॥
शोष्यते दश्यते भूयो दह्यते च निमज्ज्यते ।
एवमादिषु घोरेषु नरकेषु च पच्यते ॥ ११५ ॥
रामोऽपि गच्छन्नध्वानं चित्रकूटमथागमत् ।
तत्रैव त्रीणि वर्षाणि व्यतीतानि महामते ॥ ११६ ॥
पुनः स दक्षिणामाशामाक्रामद्दण्डकं वनम् ।
विख्यातं त्रिषु लोकेषु देशानां तद्धि पुण्यदम् ॥ ११७ ॥
प्राविशत्तन्महारण्यं भीषणं दैत्यसेवितम् ।
तद्भयादृषिभिस्त्यक्तं हत्वा दैत्यांस्तु राक्षसान् ॥ ११८ ॥
विचरन्दण्डकारण्ये ऋषिसेव्यमथाकरोत् ।
तत्रेदं वृत्तमाख्यास्ये शृणु नारद यत्नतः ॥ ११९ ॥
तावच्छनैस्त्वगाद्रामो यावद्योजनपञ्चकम् ।
गौतमीं समनुप्राप्तो राजाऽपि नरके स्थितः ॥ १२० ॥
यमः स्वकिंकरानाह रामो दशरथात्मजः ।
गौतमीमभितो याति पितरं तस्य धीमतः ॥ १२१ ॥
आकर्षन्त्वथ राजानं नरकान्नात्र संशयः ।
उत्तीर्य गौतमीं याति यावद्योजनपञ्चकम् ॥ १२२ ॥

रामस्तावत्तस्य पिता नरके नैव पच्यताम्।
यद्येतन्मद्वचः पुण्यं न कुर्युर्यदि दूतकाः ॥ १२३ ॥
ततश्च नरके घोरे यूयं सर्वे निमज्जथ।
या काऽप्युक्ता परा शक्तिः शिवस्य समवायिनी ॥ १२४ ॥
तामेव गौतमीं सन्तो वदन्त्यम्भःस्वरूपिणीम्।
हरिब्रह्ममहेशानां मान्या वन्द्या च सैव यत् ॥ १२५ ॥
निस्तीर्यते न केनापि तदतिक्रमजं त्वघम्।
पापिनोऽप्यात्मजः कश्चिद्यश्च(स्य) गङ्गामनुस्मरेत् ॥ १२६ ॥
सोऽनेकदुर्गनिरयान्निर्गतो मुक्ततां व्रजेत्।
किं पुनस्तादृशः पुत्रो गौतमीनिकटे स्थितः ॥ १२७ ॥
यस्यासौ नरके पक्तुं न कैरपि हि शक्यते।
दक्षिणाशापतेर्वाक्यं निशम्य यमकिंकराः ॥ १२८ ॥
नरके पच्यमानं तमयोध्याधिपतिं नृपम्।
उत्तार्य घोरनरकाद्वचनं चेदमब्रुवन् ॥ १२९ ॥

यमकिंकरा ऊचुः।

धन्योऽसि नृपशार्दूल यस्य पुत्रः स तादृशः।
इह चामुत्र विश्रान्तिः सुपुत्रः केन लभ्यते ॥ १३० ॥

ब्रह्मोवाच।

स विश्रान्तः शनै राजा किंकरान्वाक्यमब्रवीत् ॥ १३१ ॥

राजोवाच।

नरकेष्वथ घोरेषु पच्यमानः पुनः पुनः।
कथं त्वाकर्षितः शीघ्रं तन्मे वक्तुमिहार्हथ ॥ १३२ ॥

ब्रह्मोवाच ।

तत्र कश्चिच्छान्तमना राजानमिदमब्रवीत् ॥ १३३ ॥

यमदूत उवाच ।

वेदशास्त्रपुराणादावेतद्गोप्यं प्रयत्नतः ।
प्रकाश्यते तदपि ते सामर्थ्यं पुत्रतीर्थयोः ॥ १३४ ॥
रामस्तव सुतः श्रीमान्गौतमीतीरमागतः ।
तस्मात्त्वं नरकाद्घोरादाकृष्टोऽसि नरोत्तम ॥ १३५ ॥
यदि त्वां तत्र गौतम्यां स्मरेद्रामः सलक्ष्मणः ।
स्नानं कृत्वाऽथ पिण्डादि ते दद्यात्स नृपोत्तम ॥
ततस्त्वं सर्वपापेभ्यो मुक्तो यासि त्रिविष्टपम् ॥ १३६ ॥

राजोवाच ।

तत्र गत्वा भवद्वाक्यमाख्यास्ये स्वसुतौ प्रति ।
भवन्त एव शरणमनुज्ञां दातुमर्हथ ॥ १३७ ॥

ब्रह्मोवाच ।

तद्राजवचनं श्रुत्वा कृपया यमकिंकराः ।
आज्ञां च प्रददुस्तस्मै राजा प्रागात्सुतौ प्रति ॥ १३८ ॥
भीषणं यातनादेहमापन्नो निःश्वसन्मुहुः ।
निरीक्ष्य स्वं लज्जमानः कृतं कर्म च संस्मरन् ॥ १३९ ॥
स्वेच्छया विहरन्गङ्गामाससाद च राघवः ।
गौतम्यास्तटमाश्रित्य रामो लक्ष्मण एव च ॥ १४० ॥
सीतया सह वैदेह्या सस्नौ चैव यथाविधि ।
नैव तत्राभवद्भोज्यं भक्ष्यं वा गौतमीतटे ॥ १४१ ॥

तद्दिने तत्र वसतां गौतमीतीरवासिनाम् ।
तद्दृष्ट्वा दुःखितो भ्राता लक्ष्मणो राममब्रवीत् ॥ १४२ ॥

लक्ष्मण उवाच ।

पुत्रौ दशरथस्याऽऽवां तवापि बलमीदृशम् ।
नास्ति भोज्यमथास्माकं गङ्गातीरनिवासिनाम् ॥ १४३ ॥

राम उवाच ।

भ्रातर्यद्विहितं कर्म नैव तच्चान्यथा भवेत् ।
पृथिव्यामन्नपूर्णायां वयमन्नाभिलाषिणः ॥ १४४ ॥
सौमित्रे नूनमस्माभिर्न ब्राह्मणमुखे हुतम् ।
अवज्ञया महीदेवांस्तर्पयन्त्यर्चयन्ति न ॥ १४५ ॥
ते ये लक्ष्मण जायन्ते सर्वदैव बुभुक्षिताः ।
स्नात्वा देवानथाभ्यर्च्य होतव्यश्च हुताशनः ॥
ततः स्वसमये देवो विधास्यत्यशनं तु नौ ॥ १४६ ॥

ब्रह्मोवाच ।

भ्रात्रोः संजल्पतोरेवं पश्यतोः कर्मणो गतिम् ।
शनैर्दशरथो राजा तं देशमुपजग्मिवान् ॥ १४७ ॥
तं दृष्ट्वा लक्ष्मणः शीघ्रं तिष्ठ तिष्ठेति चाब्रवीत् ।
धनुराकृष्य कोपेन रक्षस्त्वं दानवोऽथवा ॥ १४८ ॥
आसन्नं च पुनर्दृष्ट्वा याहि यात्य(ह्य)त्र पुण्यभाक् ।
रामो दाशरथी राजा धर्मभाक्पश्य वर्तते ॥ १४९ ॥
गुरुभक्तः सत्यसंधो देवब्राह्मणसेवकः ।
त्रैलोक्यरक्षादक्षोऽसौ वर्तते यत्र राघवः ॥ १५० ॥

न तत्र त्वादृशामस्ति प्रवेशः पापकर्मणाम् ।
यदि प्रविशसे पाप ततो वधमवाप्स्यसि ॥ १५१ ॥
तत्पुत्रवचनं श्रुत्वा शनैराहूय वाचया ।
उवाचाधोमुखो भूत्वा स्नुषां पुत्रौ कृताञ्जलिः ॥
मुहुरन्तर्विनिध्यायन्गतिं दुष्कृतकर्मणः ॥ १५२ ॥

राजोवाच ।

अहं दशरथो राजा पुत्रौ मे शृणुतं वचः ।
तिसृभिर्ब्रह्महत्याभिर्वृतोऽहं दुःखभागतः ॥
छिन्नं पश्यत मे देहं नरकेषु च पातितम् ॥ १५३ ॥

ब्रह्मोवाच ।

ततः कृताञ्जली रामः सीतया लक्ष्मणेन च ।
भूमौ प्रणेमुस्ते सर्वे वचनं चैतदब्रुवन् ॥ १५४ ॥

सीतारामलक्ष्मणा ऊचुः ।

कस्येदं कर्मणस्तात फलं नृपतिसत्तम ॥ १५५ ॥

ब्रह्मोवाच ।

स च प्राह यथावृत्तं ब्रह्महत्यात्रयं तथा ॥ १५६ ॥

राजोवाच ।

निष्कृतिर्ब्रह्महन्तॄणां पुत्रौ क्वापि न विद्यते ॥ १५७ ॥

ब्रह्मोवाच ।

ततो दुःखेन महताऽऽवृताः सर्वे भुवं गताः ।
राजानं वनवासं च मातरं पितरं तथा ॥ १५८ ॥

दुःखागमं कर्मगतिं नरके पातनं तथा ।
एवमाद्यथ संस्मृत्य मुमोह नृपतेः सुतः ॥
विसंज्ञं नृपतिं दृष्ट्वा सीता वाक्यमथाब्रवीत् ॥ १५९ ॥

सीतोवाच ।

न शोचन्ति महात्मानस्त्वादृशा व्यसनागमे ।
चिन्तयन्ति प्रतीकारं दैव्यमप्यथ मानुषम् ॥ १६० ॥
शोचद्भिर्युगसाहस्रं विपत्तिर्नैव तीर्यते ।
व्यामोहमाप्नुवन्तीह न कदाचिद्विचक्षणाः ॥ १६१ ॥
किमनेनात्र दुःखेन निष्फलेन जनेश्वर ।
देहि हत्यां प्रथमतो या जाता ह्यतिभीषणा ॥ १६२ ॥
पितृभक्तः पुण्यशीलो वेदवेदाङ्गपारगः ।
अनागा यो हतो विप्रस्तत्पापस्यात्र निष्कृतिम् ॥ १६३ ॥
आचरामि यथाशास्त्रं मा शोकं कुरुतं युवाम् ।
द्वितीयां लक्ष्मणो हत्यां गृह्णातु त्वपरां भवान् ॥ १६४ ॥

ब्रह्मोवाच ।

एतद्धर्मयुतं वाक्यं सीतया भाषितं दृढम् ।
तथेति चाऽऽहतुरुभौ ततो दशरथोऽब्रवीत् ॥ १६५ ॥

दशरथ उवाच ।

त्वं हि ब्रह्मविदः कन्या जनकस्य त्वयोनिजा ।
भार्या रामस्य किं चित्रं यद्युक्तमनुभाषसे ॥ १६६ ॥
न कोऽपि भवतां किंतु श्रमः स्वल्पोऽपि विद्यते ।
गौतम्यां स्नानदानेन पिण्डनिर्वपणेन च ॥ १६७ ॥

तिसृभिर्ब्रह्महत्याभिर्मुक्ता यामि त्रिविष्टपम् ।
त्वया जनकसंभूते स्वकुलोचितमीरितम् ॥ १६८ ॥

प्रापयन्ति परं पारं भवाब्धेः कुलयोषितः ।
गोदावर्याः प्रसादेन किं नामास्त्यत्र दुर्लभम् ॥ १६९ ॥

ब्रह्मोवाच ।

तथेति क्रियमाणे तु पिण्डदानाय शत्रुहा ।
नैवापश्यद्भक्ष्यभोज्यं ततो लक्ष्मणमब्रवीत् ॥ १७० ॥

लक्ष्मणः प्राह विनयादिङ्गुद्याश्च फलानि च ।
सन्ति तेषां च पिण्याकमानीतं तत्क्षणादिव ॥ १७१ ॥

पिण्याकेनाथ गङ्गायां पिण्डं दातुं तथा पितुः ।
मनः कुर्वंस्ततो रामो मन्दोऽभूद्दुःखितस्तदा ॥ १७२ ॥

दैवी वागभवत्तत्र दुःखं त्यज नृपात्मज ।
राज्यभ्रष्टो वनं प्राप्तः किं वै निष्किंचनो भवान् ॥ १७३ ॥

अशठो धर्मनिरतो न शोचितुमिहार्हसि ।
वित्तशाठ्येन यो धर्मं करोति स तु पातकी ॥ १७४ ॥

श्रूयते सर्वशास्त्रेषु यद्राम शृणु यत्नतः ।
यदन्नः पुरुषो राजंस्तदन्नास्तस्य देवताः ॥ १७५ ॥

पिण्डे निपतिते भूमौ नापश्यत्पितरं तदा ।
शवं च पतितं यत्र शवतीर्थमनुत्तमम् ॥ १७६ ॥

महापातकसंघातविघातकृदनुस्मृतिः ।
तत्राऽऽगच्छँल्लोकपाला रुद्रादित्यास्तथाऽश्विनौ ॥ १७७ ॥

स्वं स्वं विमानमारूढास्तेषां मध्येऽतिदीप्तिमान् ।
विमानवरमारूढः स्तूयमानश्च किंनरैः ॥ १७८ ॥
आदित्यसदृशाकारस्तेषां मध्ये बभौ पिता ।
तमदृष्ट्वा स्वपितरं देवान्दृष्ट्वा विमानिनः ॥ १७९ ॥
कृताञ्जलिपुटो रामः पिता मे क्वेत्यभाषत ।
इति(ततो) दिव्याऽभवद्वाणी रामं संबोध्य सीतया ॥ १८० ॥
तिसृभिर्ब्रह्महत्याभिर्मुक्तो दशरथो नृपः ।
वृतं पश्य सुरैस्तात देवा अप्यूचिरे च तम् ॥ १८१ ॥

देवा ऊचुः ।

धन्योऽसि कृतकृत्योऽसि राम स्वर्गं गतः पिता ।
नानानिरयसंघातात्पूर्वजानुद्धरेत्तु यः ॥ १८२ ॥
स धन्योऽलंकृतं तेन कृतिना भुवनत्रयम् ।
एनं पश्य महाबाहो मुक्तपापं रविप्रभम् ॥ १८३ ॥
सर्वसंपत्तियुक्तोऽपि पापी दग्धद्रुमोपमः ।
निष्किंचनोऽपि सुकृती दृश्यते चन्द्रमौलिवत् ॥ १८४ ॥

ब्रह्मोवाच ।

दृष्ट्वाऽब्रवीत्सुतं राजा आशीर्भिरभिनन्द्य च ॥ १८५ ॥

राजोवाच ।

कृतकृत्योऽसि भद्रं ते तारितोऽहं त्वयाऽनघ ।
धन्यः स पुत्रो लोकेऽस्मिन्पितॄणां यस्तु तारकः ॥ १८६ ॥

ब्रह्मोवाच ।

ततः सुरगणाः प्रोचुर्देवानां कार्यसिद्धये ।
रामं च पुरुषश्रेष्ठं गच्छ तात यथासुखम् ॥
ततस्तद्वचनं श्रुत्वा रामस्तानब्रवीत्सुरान् ॥ १८७ ॥

राम उवाच ।

गुरौ पितरि मे देवाः किं कृत्यमवशिष्यते ॥ १८८ ॥

देवा ऊचुः ।

नदी न गङ्गया तुल्या न त्वया सदृशः सुतः ।
न शिवेन समो देवो न तारेण समो मनुः ॥ १८६ ॥
त्वया राम गुरूणां च कार्यं सर्वमनुष्ठितम् ।
तारिताः पितरो राम त्वया पुत्रेण मानद ॥
गच्छन्तु सर्वे स्वस्थानं त्वं च गच्छ यथासुखम् ॥ १६० ॥

ब्रह्मोवाच ।

तद्देवचनाद्धृष्टः सीतया लक्ष्मणाग्रजः ।
तद्दृष्ट्वा गङ्गामाहात्म्यं विस्मितो वाक्यमब्रवीत् ॥ १६१ ॥

राम उवाच ।

अहो गङ्गाप्रभावोऽयं त्रैलोक्ये नोपमीयते ।
वयं धन्या यतो गङ्गा दृष्टाऽस्माभिस्त्रिपावनी ॥ १६२ ॥

ब्रह्मोवाच ।

हर्षेण महता युक्तो देवं स्थाप्य महेश्वरम् ।
तं षोडशभिरीशानमुपचारैः प्रयत्नतः ॥ १६३ ॥

संपूज्याऽऽवरणैर्युक्तं षट्त्रिंशत्कलमीश्वरम् ।
कृताञ्जलिपुटो भूत्वा रामस्तुष्टाव शंकरम् ॥ १६४ ॥

राम उवाच ।

नमामि शंभुं पुरुषं पुराणं,
नमामि सर्वज्ञमपारभावम् ।
नमामि रुद्रं प्रभुमक्षयं तं,
नमामि शर्वं शिरसा नमामि ॥ १६५ ॥

नमामि देवं परमव्ययं त-
मुमापतिं लोकगुरुं नमामि ।
नमामि दारिद्र्यविदारणं तं,
नमामि रोगापहरं नमामि ॥ १६६ ॥

नमामि कल्याणमचिन्त्यरूपं,
नमामि विश्वोद्भवबीजरूपम् ।
नमामि विश्वस्थितिकारणं तं,
नमामि संहारकरं नमामि ॥ १६७ ॥

नमामि गौरीप्रियमव्ययं तं,
नमामि नित्यं क्षरमक्षरं तम् ।
नमामि चिद्रूपममेयभावं,
त्रिलोचनं तं शिरसा नमामि ॥ १६८ ॥

नमामि कारुण्यकरं भवस्य,
भयंकरं वाऽपि सदा नमामि ।
नमामि दातारमभीप्सितानां,
नमामि सोमेशमुमेशमादौ ॥ १६९ ॥

नमामि वेदत्रयलोचनं तं,
नमामि मूर्तित्रयवर्जितं तम् ।
नमामि पुण्यं सदसद्व्यतीतं,
नमामि तं पापहरं नमामि ॥ २०० ॥
नमामि विश्वस्य हिते रतं तं,
नमामि रूपाणि बहूनि धत्ते ।
यो विश्वगोप्ता सदसत्प्रणेता,
नमामि तं विश्वपतिं नमामि ॥ ॥ २०१ ॥
यज्ञेश्वरं संप्रति हव्यकव्यं,
तथा गतिं लोकसदाशिवो यः ।
आराधितो यश्च ददाति सर्वं,
नमामि दानप्रियमिष्टदेवम् ॥ २०२ ॥
नमामि सोमेश्वरमस्वतन्त्र-
मुमापतिं तं विजयं नमामि ।
नमामि विघ्नेश्वरनन्दिनाथं,
पुत्रप्रियं तं शिरसा नमामि ॥ २०३ ॥
नमामि देवं भवदुःखशोक-
विनाशनं चन्द्रधरं नमामि ।
नमामि गङ्गाधरमीशमीड्य-
मुमाधवं देववरं नमामि ॥ २०४ ॥
नमाम्यजादीशपुरंदरादि-
सुरासुरैरर्चितपादपद्मम् ।

नमामि देवीमुखवादनाना-
मीक्षार्थमक्षित्रितयं य ऐच्छत् ॥ २०५ ॥
पञ्चामृतैर्गन्धसुधूपदीपै-
र्विचित्रपुष्पैर्विविधैश्च मन्त्रैः ।
अन्नप्रकारैः सकलोपचारैः,
संपूजितं सोममहं नमामि ॥ २०६ ॥

ब्रह्मोवाच ।

ततः स भगवानाह रामं शंभुः सलक्ष्मणम् ।
वरान्वृणीष्व भद्रं ते रामः प्राह वृषध्वजम् ॥ २०७ ॥

राम उवाच ।

स्तोत्रेणानेन ये भक्त्या तोषयन्ति त्वां सुरोत्तम ।
तेषां सर्वाणि कार्याणि सिद्धिं यान्तु महेश्वर ॥ २०८ ॥
येषां च पितरः शंभो पतिता नरकार्णवे ।
तेषां पिण्डादिदानेन पूता यान्तु त्रिविष्टपम् ॥ २०९ ॥
जन्मप्रभृति पापानि(यच्चापि)मनोवाक्कायिकं त्वघम् ।
अत्र तु स्नानमात्रेण तत्सद्यो नाशमाप्नुयात् ॥ २१० ॥
अत्र ये भक्तितः शंभो ददत्यर्थिभ्य अण्वपि ।
सर्वं तदक्षयं शंभो दातॄणां फलकृद्भवेत् ॥ २११ ॥

ब्रह्मोवाच ।

एवमस्त्विति तं रामं शंकरो हर्षितोऽब्रवीत् ।
गते तस्मिन्सुरश्रेष्ठे रामोऽप्यनुचरैः सह ॥ २१२ ॥

गौतमी यत्र चोत्पन्ना शनैस्तं देशमभ्यगात् ।
ततः प्रभृति तत्तीर्थं रामतीर्थमुदाहृतम् ॥ २१३ ॥
दयालोरपतत्त(द्य) त्र लक्ष्मणस्य कराच्छरः ।
तद्बाणतीर्थमभवत्सर्वापद्विनिवारणम् ॥ २१४ ॥
यत्र सौमित्रिणा स्नानं शंकरस्यार्चनं कृतम् ।
तत्तीर्थं लक्ष्मणं जातं तथा सीतासमुद्भवम् ॥ २१५ ॥
नानाविधाशेषपापसंघनिर्मूलनक्षमम् ।
यदङ्घ्रिसङ्गादभवद्गङ्गा त्रैलोक्यपावनी ॥ २१६ ॥
स यत्र स्नानमकरोत्तद्वैशिष्ट्यं किमुच्यते ।
तद्रामतीर्थसदृशं तीर्थं क्वापि न विद्यते ॥ २१७ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये रामतीर्थादितीर्थवर्णनं नाम त्रयोविंशाधिकशततमोऽध्यायः ॥ १२३ ॥
गौतमीमाहात्म्ये चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

## अथ चतुर्विंशाधिकशततमोऽध्यायः ।

### पुत्रतीर्थवर्णनम्

ब्रह्मोवाच ।

पुत्रतीर्थमिति ख्यातं पुण्यतीर्थं तदुच्यते ।
सर्वान्कामानवाप्नोति यन्महिम्नः श्रुतेरपि ॥ १ ॥

तस्य स्वरूपं वक्ष्यामि शृणु यत्नेन नारद।
दितेः पुत्राश्च दनुजाः परिक्षीणा यदाऽभवन्॥
अदितेस्तु सुता ज्येष्ठाः सर्वभावेन नारद॥ २॥

तदा दितिः पुत्रवियोगदुःखा-
त्संस्पर्धमाना दनुमाजगाम॥ ३॥

दितिरुवाच।

क्षीणाः सुता आवयोरेव भद्रे,
किं कुर्महे कर्म लोके गरीयः।
पश्यादितेर्वंशमभिन्नमुत्तमं,
सौराज्ययुक्तं यशसा जयश्रिया॥ ४॥
जितारिमभ्युन्नतकीर्तिधर्मं,
मच्चित्तसंहर्षविनाशदक्षम्।
समानभर्तृत्वसमानधर्मे,
समानगोत्रेऽपि समानरूपे॥ ५॥
न जीवयेयं श्रियमुन्नतिं च,
जीर्णाऽस्मि दृष्ट्वा त्वदितिप्रसूतान्।
कामप्यवस्थामनुयामि दुःस्थाऽ-
दितेर्विलोक्याथ परां समृद्धिम्॥
दावप्रवेशोऽपि सुखाय नूनं,
स्वप्नेऽप्यवेक्ष्या न सपत्नलक्ष्मीः॥ ६॥

ब्रह्मोवाच।

एवं ब्रुवाणामतिदीनवक्त्रां,
विनिश्वसन्तीं परमेष्ठिपुत्रः।

कृताभिपूजो विगतश्रमस्तां,
स सान्त्वयन्नाह मनोभिरामाम् ॥ ७ ॥

परमेष्ठिपुत्र उवाच ।

खेदो न कार्यः समभीप्सितं य-
त्तत्प्राप्यते पुण्यत एव भद्रे ।
तत्साधनं वेत्ति महानुभावः,
प्रजापतिस्ते स तु वक्ष्यतीति ॥ ८ ॥
साध्व्येतत्सर्वभावेन प्रश्रयावनता सती ॥ ९ ॥

ब्रह्मोवाच ।

एवं ब्रुवाणां च दितिं दनुः प्रोवाच नारद ॥१०॥

दनुरुवाच ।

भर्तारं कश्यपं भद्रे तोषयस्व निजैर्गुणैः ।
तुष्टो यदि भवेद्भर्ता ततः कामानवाप्स्यसि ॥ ११ ॥

ब्रह्मोवाच ।

तथेत्युक्त्वा सर्वभावैस्तोषयामास कश्यपम् ।
दितिं प्रोवाच भगवान्कश्यपोऽथ प्रजापतिः ॥ १२ ॥

कश्यप उवाच ।

किं ददामि वदाभीष्टं दिते वरय सुव्रते ॥ १३ ॥

ब्रह्मोवाच ।

दितिरप्याह भर्तारं पुत्रं बहुगुणान्वितम् ।
जेतारं सर्वलोकानां सर्वलोकनमस्कृतम् ॥ १४ ॥

येन जातेन लोकेऽस्मिन्भवेयं वीरपुत्रिणी ।
तं वरेयं सुरपितरित्याह विनयान्विता ॥ १५ ॥

कश्यप उवाच ।

उपदेक्ष्ये व्रतं श्रेष्ठं द्वादशाब्दफलप्रदम् ।
तत आगत्य ते गर्भमाधास्ये यन्मनोगतम् ॥
निष्पापतायां जातायां सिध्यन्ति हि मनोरथाः ॥ १६ ॥

ब्रह्मोवाच ।

भर्तृवाक्याद्दितिः प्रीता तं नमस्याऽऽयतेक्षणा ।
उपदिष्टं व्रतं चक्रे भर्त्राऽऽदिष्टं यथाविधि ॥ १७ ॥
तीर्थसेवापात्रदानव्रतचर्यादिवर्जिताः ।
कथमासादयिष्यन्ति प्राणिनोऽत्र मनोरथान् ॥ १८ ॥
ततश्चीर्णे व्रते तस्यां दित्यां गर्भमधारयत् ।
पुनः कान्तामथोवाच कश्यपस्तां दितिं रहः ॥ १९ ॥

कश्यप उवाच ।

न प्राप्नुवन्ति यत्कामान्मुनयोऽपि तपस्थिताः ।
यथाविहितकर्माङ्गावज्ञया तच्छुचिस्मिते ॥ २० ॥
निन्दितं च न कर्तव्यं संध्ययोरुभयोरपि ।
न स्वप्तव्यं न गन्तव्यं मुक्तकेशी च नो भव ॥ २१ ॥
भोक्तव्यं सुभगे नैव क्षुतं वा जृम्भणं तथा ।
संध्याकाले न कर्तव्यं भूतसंघसमाकुले ॥ २२ ॥
सान्तर्धानं सदा कार्यं हसितं तु विशेषतः ।
गृहान्तदेशे संध्यासु न स्थातव्यं कदाचन ॥ २३ ॥

मुशलोलूखलादीनि शूर्पपीठपिधानकम् ।
नैवातिक्रमणीयानि दिवा रात्रौ सदा प्रिये ॥ २४ ॥
उदक्शीर्षं तु शयनं न संध्यासु विशेषतः ।
वक्तव्यं नानृतं किंचिन्नान्यगेहाटनं तथा ॥ २५ ॥
कान्तादन्यो न वीक्ष्यस्तु प्रयत्नेन नरः क्वचित् ।
इत्यादिनियमैर्युक्ता यदि त्वमनुवर्तसे ॥
ततस्ते भविता पुत्रस्त्रैलोक्यैश्वर्यभाजनम् ॥ २६ ॥

ब्रह्मोवाच ।

तथेति प्रतिजज्ञे सा भर्तारं लोकपूजितम् ।
गतश्च कश्यपो ब्रह्मन्नितश्चेतः सुरान्प्रति ॥ २७ ॥
दितेर्गर्भोऽपि ववृधे बलवान्पुण्यसंभवः ।
एतत्सर्वं मयो दैत्यो मायया वेत्ति तत्त्वतः ॥ २८ ॥
इन्द्रस्य सख्यमभवन्मयेन प्रीतिपूर्वकम् ।
मयो गत्वा रहः प्राह इन्द्रं स विनयान्वितः ॥ २९ ॥
दितेर्दनोरभिप्रायं व्रतं गर्भस्य वर्धनम् ।
तस्य वीर्यं च विविधं प्रीत्येन्द्राय न्यवेदयत् ॥ ३० ॥
विश्वासैकगृहं मित्रमपायत्रासवर्जितम् ।
अर्जितं सुकृतं नानाविधं चेत्तदवाप्यते ॥ ३१ ॥

नारद उवाच ।

नमुचेश्च प्रियो भ्राता मयो दैत्यो महाबलः ।
भ्रातृहन्त्रा कथं मैत्र्यं मयस्याऽसीत्सुरेश्वर ॥ ३२ ॥

ब्रह्मोवाच ।

दैत्यानामधिपश्चाऽऽसीद्बलवान्नमुचिः पुरा ।
इन्द्रेण वैरमभवद्भीषणं लोमहर्षणम् ॥ ३३ ॥
युद्धं हित्वा कदाचिद्वो गच्छन्तं तु शतक्रतुम् ।
दृष्ट्वा दैत्यपतिः शूरो नमुचिः पृष्ठतोऽन्वगात् ॥ ३४ ॥
तमायान्तमभिप्रेक्ष्य शचीभर्ता भयातुरः ।
ऐरावतं गजं त्यक्त्वा इन्द्रः फेनमथाऽऽविशत् ॥ ३५ ॥
स वज्रपाणिस्तरसा फेनेनैवाहनद्रिपुम् ।
नमुचिर्नाशमगमत्तस्य भ्राता मयोऽनुजः ॥ ३६ ॥
भ्रातृहन्तृविनाशाय तपस्तेपे मयो महत् ।
मायां च विविधामाप देवानामतिभीषणाम् ॥ ३७ ॥
वरांश्चावाप्य तपसा विष्णोर्लोकपरायणात् ।
दानशौण्डः प्रियालापी तदाऽभवदसौ मयः ॥ ३८ ॥
अग्नींश्च ब्राह्मणान्पूज्य जेतुमिन्द्रं कृतक्षणः ।
दातारं च तदाऽर्थिभ्यः स्तूयमानं च बन्दिभिः ॥ ३९ ॥
विदित्वा मघवा वायोर्मयं मायाविनं रिपुम् ।
उपक्रान्तं सुयुद्धाय विप्रो भूत्वा तमभ्यगात् ॥
शचीभर्ता मयं दैत्यं प्रोवाचेदं पुनः पुनः ॥ ४० ॥

इन्द्र उवाच ।

देहि दैत्यपते मह्यमर्थिनेऽपेक्षितं वरम् ।
त्वां श्रुत्वा दातृतिलकमागतोऽहं द्विजोत्तमः ॥ ४१ ॥

ब्रह्मोवाच ।

मयोऽपि ब्राह्मणं मत्वाऽवदद्दत्तं मया तव ।
विचारयन्ति कृतिनो बह्वल्पं वा पुरोऽर्थिनि ॥ ४२ ॥
इत्युक्ते तु हरिः प्राह सख्यमिच्छे ह्यहं त्वया ।
इन्द्रं मयः पुनः प्राह किमनेन द्विजोत्तम ॥ ४३ ॥
न त्वया मम वैरं भोः स्वस्तीत्याह हरिर्मयम् ।
तत्त्वं वदेति स हरिर्दैत्येनोक्तः स्वकं वपुः ॥ ४४ ॥
दर्शयामास दैत्याय सहस्राक्षं यदुच्यते ।
ततः सविस्मयो दैत्यो मयो हरिमुवाच ह ॥ ४५ ॥

मय उवाच ।

किमिदं वज्रपाणिस्त्वं तवायोग्या कृतिः सखे ॥ ४६ ॥

ब्रह्मोवाच ।

परिष्वज्य विहस्याथ वृत्तमित्यब्रवीद्धरिः ।
केनापि साधयन्त्यत्र पण्डिताश्च समीहितम् ॥ ४७ ॥
ततः प्रभृति शक्रस्य मयेन महती ह्यभूत् ।
सुप्रीतिर्मुनिशार्दूल मयो हरिहितः सदा ॥ ४८ ॥
इन्द्रस्य भवनं गत्वा तस्मै सर्वं न्यवेदयत् ।
किं मे कृत्यमिति प्राह मयं मायाविनं हरिः ॥ ४९ ॥
हरये च मयो मायां प्रादात्प्रीत्या तथा हरिः ।
प्राप्तः संप्रीतिमानाह किं कृत्यं मय तद्वद ॥ ५० ॥

मय उवाच ।

अगस्त्यस्याऽऽश्रमं गच्छ तत्राऽऽस्ते गर्भिणी दितिः ।
तस्याः शुश्रूषणं कुर्वन्नास्स्व तत्र कियन्ति च ॥ ५१ ॥

अह्नानि मघवंस्तस्या गर्भमाविश्य वज्रधृक्।
वर्धमानं च तं छिन्धि यावद्वश्योऽथवा मृतिम्॥
प्राप्नोति तावद्वज्रेण ततो न भविता रिपुः॥ ५२

ब्रह्मोवाच।

तथेत्युक्त्वा मयं पूज्य मघवानेक एव हि।
विनीतवत्तदा प्रायाद्दितिं मातरमञ्जसा॥ ५३॥
शुश्रूषमाणस्तां देवीं शक्रो दैतेयमातरम्।
सा न जानाति तच्चित्तं शक्रस्य द्विषतो दितिः॥ ५४॥
गर्भे स्थितं तु यद्भूतं देवेन्द्रस्य विचेष्टितम्।
अमोघं तन्मुनेस्तेजः कश्यपस्य दुरासदम्॥ ५५॥
ततः प्रगृह्य कुलिशं सहस्राक्षः पुरंदरः।
अन्तःप्रवेशकामोऽसौ बहुकालं समावसन्॥ ५६॥
संध्योदकशीर्षनिद्रां तामवेक्ष्य कुलिशायुधः।
इदमन्तरमित्युक्त्वा दित्याः कुक्षिं समाविशत्॥ ५७॥
अन्तर्वर्ति च यद्भूतमिन्द्रं दृष्ट्वा धृतायुधम्।
हन्तुकामं तदोवाच पुनः पुनरभीतवत्॥ ५८॥

गर्भस्थ उवाच।

किं मां न रक्षसे वज्रिन्भ्रातरं त्वं जिघांससि।
नारणे मारणादन्यत्पातकं विद्यते महत्॥ ५९॥
ऋते युद्धान्महाबाहो शक्र युध्यस्व निर्गते।
मयि तस्मान्नैतदेवं तव युक्तं भविष्यति॥ ६०॥

शतक्रतुः सहस्राक्षः शचीभर्ता पुरंदरः ।
वज्रपाणिः सुरेन्द्रस्त्वं ते न युक्तं भवेत्प्रभो ॥ ६१ ॥
अथवा युद्धकामस्त्वं मम निष्क्रमणं यथा ।
तथा कुरु महाबाहो मार्गादस्मादपासर ॥ ६२ ॥
कुमार्गे न प्रवर्तन्ते महान्तोऽपि विपद्गताः ।
अविद्यश्चाप्ययशस्त्रश्च नैव चाऽऽयुधसंग्रहः ॥ ६३ ॥
त्वं विद्यावान्वज्रपाणे मां निघ्नन्कि न लज्जसे ।
कुर्वन्ति गर्हितं कर्म न कुलीनाः कदाचन ॥ ६४ ॥
हत्वा वा किं तु जायेत यशो वा पुण्यमेव वा ।
वध्यन्ते भ्रातरः कामाद्गर्भस्थाः किं न पौरुषम् ॥ ६५ ॥
यदि वा युद्धभक्तिस्ते मयि भ्रातर संशयम् ।
ततो मुष्टिं पुरस्कृत्य वज्रिणेऽसौ व्यवस्थितः ॥ ६६ ॥
बालघाती ब्रह्मघाती तथा विश्वासघातकः ।
एवंभूतं फलं शक्र कस्मान्मां हन्तुमुद्यतः ॥ ६७ ॥
यस्याऽऽज्ञया सर्वमिदं वर्तते सचराचरम् ।
स हन्ता बालकं मां वै किं यशः किंतु पौरुषम् ॥ ६८ ॥

ब्रह्मोवाच ।

एवं ब्रुवन्तं तं गर्भं चिच्छेद कुलिशेन सः ।
क्रोधान्धानां लोभिनां च न घृणा क्वापि विद्यते ॥ ६९ ॥
न ममार ततो दुःखादाहुस्ते भ्रातरो वयम् ।
पुनश्चिच्छेद तान्खण्डान्मा वधीरिति चाब्रुवन् ॥ ७० ॥

विश्वस्तान्मातृगर्भस्थान्निजभ्रातॄञ्शतक्रतो ।
द्वेषविध्वस्तबुद्धीनां न चित्ते करुणाकणः ॥ ७१ ॥

एवं तु खण्डितं खण्डं हस्तपादादिजीववत् ।
निर्विकारं ततो दृष्ट्वा सप्तसप्त सुविस्मितः ॥ ७२ ॥

एकवद्बहुरूपाणि गर्भस्थानि शुभानि च ।
रुदन्ति बहुरूपाणि मा रुदेत्यब्रवीद्धरिः ॥ ७३ ॥

ततस्ते मरुतो जाता बलवन्तो महौजसः ।
गर्भस्था एव तेऽन्योन्यमूचुः शक्रं गतभ्रमाः ॥ ७४ ॥

अगस्त्यं मुनिशार्दूलं माता यस्याऽऽश्रमे स्थिता ।
अस्मत्पिता तव भ्राता सख्यं ते बहु मन्यते ॥ ७५ ॥

अस्मानुपरि सस्नेहं मनस्ते विद्महे मुने ।
न यत्करोति श्वपचः प्रवृत्तस्तत्र वज्रधृक् ॥ ७६ ॥

इत्येतद्वचनं श्रुत्वा अगस्त्योऽगात्ससंभ्रमः ।
दितिं संबोधयामास व्यथितां गर्भवेदनात् ॥
तत्रागस्त्यः शचीकान्तमशपत्कुपितो भृशम् ॥ ७७ ॥

अगस्त्य उवाच ।

सङ्ग्रामे रिपवः पृष्ठं पश्येयुस्ते सदा हरे ।
जीवतामेव मरणमेतदेव हि मानिनाम् ॥
पृष्ठं पलायमानानां यत्पश्यन्त्यहिता रणे ॥ ७८ ॥

ब्रह्मोवाच ।

साऽपि तं गर्भसंस्थं च शशापेन्द्रं रुषा दितिः ॥ ७९ ॥

दितिरुवाच ।

न पौरुषं कृतं तस्माच्छापोऽयं भविता तव ।
स्त्रीभिः परिभवं प्राप्य राज्यात्प्रभ्रश्यसे हरे ॥ ८० ॥

ब्रह्मोवाच ।

एतस्मिन्नन्तरे तत्र कश्यपो वै प्रजापतिः ।
प्रायाच्च व्यथितोऽगस्त्याच्छ्रुत्वा शक्रविचेष्टितम् ॥
गर्भान्तरगतः शक्रः पितरं प्राह भीतवत् ॥ ८१ ॥

शक्र उवाच ।

अगस्त्याच्च दितेश्चैव बिभेमि क्रमितुं बहिः ॥ ८२ ॥

ब्रह्मोवाच ।

एतस्मिन्नन्तरे प्राप्य कश्यपोऽपि प्रजापतिः ।
पुत्रकर्म च तद्दृष्ट्वा गर्भान्तःस्थितिमेव च ॥
दितिशापमगस्त्यस्य श्रुत्वाऽसौ दुःखितोऽभवत् ॥ ८३ ॥

कश्यप उवाच ।

निर्गच्छ शक्र पुत्रैतत्पापं किं कृतवानसि ।
न निर्मलकुलोत्पन्ना मनः कुर्वन्ति पातके ॥ ८४ ॥

ब्रह्मोवाच ।

स निर्गतो वज्रपाणिः सव्रीडोऽधोमुखोऽब्रवीत् ।
तन्मूर्तिरेव वदति सदसच्चेष्टितं नृणाम् ॥ ८५ ॥

शक्र उवाच ।

यदुक्तमत्र श्रेयः स्यात्तत्कर्ताऽहमसंशयम् ॥ ८६ ॥

ब्रह्मोवाच ।

ततो ममान्तिकं प्रायाल्लोकपालैः स कश्यपः ।
सर्वं वृत्तमथोवाच पुनः पप्रच्छ मां सुरैः ॥ ८७ ॥
दितिगर्भस्य वै शान्तिं सहस्राक्षविशापताम् ।
गर्भस्थानां च सर्वेषामिन्द्रेण सह मित्रताम् ॥ ८८ ॥
तेषामारोग्यतां चापि शचीभर्तुरदोषताम् ।
अगस्त्यदत्तशापस्य विशापत्वमपि क्रमात् ॥ ८९ ॥
ततोऽहमब्रवं वाक्यं कश्यपं विनयान्वितम् ।
प्रजापते कश्यप त्वं वसुभिर्लोकपालकैः ॥ ९० ॥
इन्द्रेण सहितः शीघ्रं गौतमीं याहि मानद ।
तत्र स्नात्वा महेशानं स्तुहि सर्वैः समन्वितः ॥ ९१ ॥
ततः शिवप्रसादेन सर्वं श्रेयो भवेदिति ।
तथेत्युक्त्वा जगामासौ कश्यपो गौतमीं तदा ॥ ९२ ॥
स्नात्वा तुष्टाव देवेशमेभिरेव पदक्रमैः ।
सर्वदुःखापनोदाय द्वयमेव प्रकीर्तितम् ।
गौतमी वा पुण्यनदी शिवो वा करुणाकरः ॥ ९३ ॥

कश्यप उवाच ।

पाहि शंकर देवेश पाहि लोकनमस्कृत ।
पाहि पावन वागीश पाहि पन्नगभूषण ॥ ९४ ॥
पाहि धर्म वृषारूढ पाहि वेदत्रयेक्षण ।
पाहि गोधरलक्ष्मीश पाहि शर्व गजाम्बर ॥ ९५ ॥

पाहि त्रिपुरहन्नाथ पाहि सोमार्धभूषण ।
पाहि यज्ञेश सोमेश पाह्यभीष्टप्रदायक ॥ ९६ ॥
पाहि कारुण्यनिलय पाहि मङ्गलदायक ।
पाहि प्रभव सर्वस्य पाहि पालक वासव ॥ ९७ ॥
पाहि भास्कर वित्तेश पाहि ब्रह्मनमस्कृत ।
पाहि विश्वेश सिद्धेश पाहि पूर्ण नमोऽस्तु ते ॥ ९८ ॥
घोरसंसारकान्तारसंचारोद्विग्नचेतसाम् ।
शरीरिणां कृपासिन्धो त्वमेव शरणं शिव ॥ ९९ ॥

ब्रह्मोवाच ।

एवं संस्तुवतस्तस्य पुरतोऽभूद्वृषध्वजः ।
वरेण च्छन्दयामास कश्यपं तं प्रजापतिम् ॥ १०० ॥
कश्यपोऽपि शिवं प्राह विनीतवदिदं वचः ।
स प्राह विस्तरेणाथ इन्द्रस्य तु विचेष्टितम् ॥ १०१ ॥
शापं नाशं च पुत्राणां परस्परममित्रताम् ।
पापप्राप्तिं तु शक्रस्य शापप्राप्तिं तथैव च ॥
ततो वृषाकपिः प्राह दितिं चागस्त्यमेव च ॥ १०२ ॥

शिव उवाच ।

मरुतो ये भवत्पुत्राः पञ्चाशच्चैकवर्जिताः ।
सर्वे भवेयुः सुभगा भवेयुर्यज्ञभागिनः ॥ १०३ ॥
इन्द्रेण सहिता नित्यं वर्तयेयुर्मुदाऽन्विताः ॥ १०४ ॥
इन्द्रस्य तु हविर्भागो यत्र यत्र मखे भवेत् ।
आदौ तु मरुतस्तत्र भवेयुर्नात्र संशयः १०५ ॥

मरुद्भिः सहितं शक्रं न जयेयुः कदाचन।
जेता भवेत्सर्वदैव सुखं तिष्ठ प्रजापते ॥ १०६ ॥
अद्यप्रभृति ये कुर्युरनयाद्भ्रातृघातनम्।
वंशच्छेदो विपत्तिश्च नित्यं तेषा भविष्यति ॥ १०७ ॥

ब्रह्मोवाच।

अगस्त्यमृषिशार्दूलं शंभुरप्याह यत्नतः ॥ १०८ ॥

शंभुरुवाच।

न कुर्यास्त्वं च कोपं च शचीभर्तरि वै मुने।
शमं व्रज महाप्राज्ञ मरुतस्त्वमरा भवन् ॥ १०९ ॥

ब्रह्मोवाच।

दितिं चापि शिवः प्राह प्रसन्नो वृषभध्वजः ॥ ११० ॥

शिव उवाच।

एको भूयान्मम सुतस्त्रैलोक्यैश्वर्यमण्डितः।
इत्येवं चिन्तयन्ती त्वं तपसे नियताऽभवः ॥ १११ ॥
तदेतत्सफलं तेऽद्य पुत्रा बहुगुणाः शुभाः।
अभवन्बलिनः शूरास्तस्माज्जहि मनोरुजम् ॥
अन्यानपि वरान्सुभ्रूर्याचस्व गतसंभ्रमा ॥ ११२ ॥

ब्रह्मोवाच।

तदेतद्वचनं श्रुत्वा देवदेवस्य सा दितिः।
कृताञ्जलिपुटा नत्वा शंभुं वाक्यमथाब्रवीत् ॥ ११३ ॥

दितिरुवाच।

लोके यदेतत्परमं यत्पित्रोः पुत्रदर्शनम्।
विशेषेण तु तन्मातुः प्रियं स्यात्सुरपूजित ॥ ११४ ॥

तत्रापि रूपसंपत्तिशौर्यविक्रमवान्भवेत् ।
एकोऽपि तनयः किंतु बहवश्चेत्किमुच्यते ॥ ११५ ॥
मत्पुत्रास्ते प्रभावाच्च जेतारो बलिनो ध्रुवम् ।
इन्द्रस्य भ्रातरः सत्यं पुत्राश्चैव प्रजापतेः ॥ ११६ ॥
अगस्त्यस्य प्रसादाच्च गङ्गायाश्च प्रसादतः ।
यत्र देव प्रसादस्ते तच्छुभं कोऽत्र संशयः ॥ ११७ ॥
कृतार्थाऽहं तथाऽपि त्वां भक्त्या विज्ञापयाम्यहम् ।
शृणुष्व देव वचनं कुरुष्व च जगद्धितम् ॥ ११८ ॥

ब्रह्मोवाच ।

वदेत्युक्ता जगद्धात्रा दितिर्नम्राऽब्रवीदिदम् ॥ ११९ ॥

दितिरुवाच ।

सन्ततिप्रापणं लोके दुर्लभं सुरवन्दित ।
विशेषेण प्रियं मातुः पुत्रश्चेत्किं नु वर्ण्यते ॥ १२० ॥
स चापि गुणवाञ्श्रीमानायुष्मान्यदि जायते ।
किंतु स्वर्गेण देवेश पारमेष्ठ्यपदेन वा ॥ १२१ ॥
सर्वेषामपि भूतानामिहामुत्र फलैषिणाम् ।
गुणवत्पुत्रसंप्राप्तिरभीष्टा सर्वदैव हि ॥
तस्मादाप्लवनादत्र क्रियतां समनुग्रहः ॥ १२२ ॥

शंकर उवाच ।

महापापफलं चेदं यदेतदनपत्यता ।
स्त्रिया वा पुरुषस्यापि वन्ध्यत्वं यदि जायते ॥ १२३ ॥

तदत्र स्नानमात्रेण तद्दोषो नाशमाप्नुयात् ।
स्नात्वा तत्र फलं दद्यात्स्तोत्रमेतच्च यः पठेत् ॥ १२४ ॥
स तु पुत्रमवाप्नोति त्रिमासस्नानदानतः ।
अपुत्रिणी त्वत्र स्नानं कृत्वा पुत्रमवाप्नुयात् ॥ १२५ ॥
ऋतुस्नाता तु या काचित्तत्र स्नाता सुताँल्लभेत् ।
त्रिमासाभ्यन्तरं या तु गुर्विणी भक्तितस्त्विह ॥ १२६ ॥
फलैः स्नात्वा तु मां पश्येत्स्तोत्रेण स्तौति मां तथा ।
तस्याः शक्रसमः पुत्रो जायते नात्र संशयः ॥ १२७ ॥
पितृदोषैश्च ये पुत्रं न लभन्ते दिते शृणु ।
धनापहारदोषैश्च तत्रैषा निष्कृतिः परा ॥ १२८ ॥
तत्रैषां पिण्डदानेन पितॄणां प्रीणनेन च ।
किंचित्सुवर्णदानेन ततः पुत्रो भवेद्ध्रुवम् ॥ १२९ ॥
ये न्यासाद्यपहर्तारो रत्नापह्नवकारकाः ।
श्राद्धकर्मविहीनाश्च तेषां वंशो न वर्धते ॥ १३० ॥
दोषिणां तु परेतानां गतिरेषा भवेदिति ।
संततिर्जायतां श्लाघ्या जीवतां तीर्थसेवनात् ॥ १३१ ॥
संगमे दितिगङ्गायाः स्नात्वा सिद्धेश्वरं प्रभुम् ।
अनाद्यपारमजरं चित्सदानन्दविग्रहम् ॥ १३२ ॥
देवर्षिसिद्धगन्धर्वयोगीश्वरनिषेवितम् ।
लिङ्गात्मकं महादेवं ज्योतिर्मयमनामयम् ॥ १३३ ॥
पूजयित्वोपचारैश्च नित्यं भक्त्या यतव्रतः ।
स्तोत्रेणानेन यः स्तौति चतुर्दश्यष्टमीषु च ॥ १३४ ॥

यथाशक्त्या(क्ति) स्वर्णदानं ब्राह्मणानां च भोजनम् ।
यः करोत्यत्र गङ्गायां स पुत्रशतमाप्नुयात् ॥ १३५ ॥
संप्राप्य सकलान्कामानन्ते शिवपुरं व्रजेत् ।
स्तोत्रेणानेन यः कश्चिद्यत्र क्वापि स्तवीति माम् ॥
षण्मासात्पुत्रमाप्नोति अपि वन्ध्याऽप्यशङ्कितम् ॥ १३६ ॥

ब्रह्मोवाच ।

ततः प्रभृति तत्तीर्थं पुत्रतीर्थमुदाहृतम् ।
तत्र तु स्नानदानाद्यैः सर्वकामानवाप्नुयात् ॥ १३७ ॥
मरुद्भिः सह मैत्र्येण मित्रतीर्थं तदुच्यते ।
निष्पापत्वेन चेन्द्रस्य शक्रतीर्थं तदुच्यते ॥ १३८ ॥
ऐन्द्रीं श्रियं यत्र लेभे तत्तीर्थं कमलाभिधम् ।
एतानि सर्वतीर्थानि सर्वाभीष्टप्रदानि हि ॥ १३९ ॥
सर्वं भविष्यतीत्युक्त्वा शिवश्चान्तरधीयत ।
कृतकृत्याश्च ते जग्मुः सर्वं एव यथागतम् ॥
तीर्थानां पुण्यदं तत्र लक्षमेकं प्रकीर्तितम् ॥ १४० ॥

इति श्रीमहापुराणे आदिब्राह्मे स्वयंभ्वृषिसंवादे तीर्थमाहात्म्ये पुत्रतीर्थादिलक्षतीर्थवर्णनं नाम चतुर्विंशाधिक-शततमोऽध्यायः ॥ १२४ ॥

गौतमीमाहात्म्ये पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

# अथ पञ्चविंशाधिकशततमोऽध्यायः ।

## यमतीर्थवर्णनम्

ब्रह्मोवाच ।

यमतीर्थमिति ख्यातं पितॄणां प्रीतिवर्धनम् ।
दृष्टादृष्टेष्टदं सर्वदेवर्षिगणसेवितम् ॥ १ ॥
तस्य प्रभावं वक्ष्यामि सर्वपापप्रणाशनम् ।
अनुह्राद इति ख्यातः कपोतो बलवानभूत् ॥ २ ॥
तस्य भार्या हेतिनाम्नी पक्षिणी कामरूपिणी ।
मृत्योः पौत्रो ह्यनुह्रादो दौहित्री हेतिरेव च ॥ ३ ॥
कालेनाथ तयोः पुत्राः पौत्राश्चैव बभूविरे ।
तस्य शत्रुश्च बलवानुलूको नाम पक्षिराट् ॥ ४ ॥
तस्य पुत्राश्च पौत्राश्च आग्नेयास्ते बलोत्कटाः ।
तयोश्च वैरमभवद्बहुकालं द्विजन्मनोः ॥ ५ ॥
गङ्गाया उत्तरे तीरे कपोतस्याऽऽश्रमोऽभवत् ।
तस्याश्च दक्षिणे कूल उलूको नाम पक्षिराट् ॥ ६ ॥
वासं चक्रे तत्र पुत्रैः पौत्रैश्च द्विजसत्तम ।
तयोश्च युद्धमभवद्बहुकालं विरुद्धयोः ॥ ७ ॥
पुत्रैः पौत्रैश्च वृतयोर्बलिनोर्बलिभिः सह ।
उलूको वा कपोतो वा नैवाऽऽप्नोति जयाजयौ ॥ ८ ॥
कपोतो यममाराध्य मृत्युं पैतामहं तथा ।
याम्यमस्त्रमवाप्याथ सर्वेभ्योऽप्यधिकोऽभवत् ॥ ९ ॥

तथोलूकोऽग्निमाराध्य बलवानभवद्भृशम् ।
वरैरुन्मत्तयोर्युद्धमभवच्चातिभीषणम् ॥ १० ॥
तत्राऽऽग्नेयमुलूकोऽपि कपोतायास्त्रमाक्षिपत् ।
कपोतोऽप्यथ पाशान्वै याम्यानाक्षिप्य शत्रवे ॥ ११ ॥
उलूकायाथ दण्डं च मृत्युपाशानवासृजत् ।
पुनस्तदभवद्युद्धं पुराऽऽडीबकयोर्यथा ॥ १२ ॥
हेतिः कपोतकी दृष्ट्वा ज्वलनं प्राप्तमन्तिके ।
पतिव्रता महायुद्धे भर्तुः सा दुःखविह्वला ॥ १३ ॥
अग्निना वेष्ट्यमानांश्च पुत्रान्दृष्ट्वा विशेषतः ।
सा गत्वा ज्वलनं हेतिस्तुष्टाव विविधोक्तिभिः ॥ १४ ॥

हेतिरुवाच ।

रूपं न दानं न परोक्षमस्ति,
यस्याऽऽत्मभूतं च पदार्थजातम् ।
अश्नन्ति हव्यानि च येन देवाः,
स्वाहापतिं यज्ञभुजं नमस्ये ॥ १५ ॥

मुखभूतं च देवानां देवानां हव्यवाहनम् ।
होतारं चापि देवानां देवानां दूतमेव च ॥ १६ ॥
तं देवं शरणं यामि आदिदेवं विभावसुम् ।
अन्तःस्थितः प्राणरूपो बहिश्चान्नप्रदो हि यः ॥
यो यज्ञसाधनं यामि शरणं तं धनंजयम् ॥ १७ ॥

अग्निरुवाच ।

अमोघमेतदस्त्रं मे न्यस्तं युद्धे कपोतकि ।
यत्र विश्रमयेदस्त्रं तन्मे ब्रूहि पतिव्रते ॥ १८ ॥

कपोत्युवाच ।

मयि विश्वस्यतामस्त्रं न पुत्रे न च भर्तरि ।
सत्यवाग्भव हव्येश जातवेदो नमोऽस्तु ते ॥ १६ ॥

जातवेदा उवाच ।

तुष्टोऽस्मि तव वाक्येन भर्तृभक्त्या पतिव्रते ।
तवापि भर्तृपुत्राणां हेति क्षेमं ददाम्यहम् ॥ २० ॥
आग्नेयमेतदस्त्रं मे न भर्तारं सुतानपि ।
न त्वां दहेत्ततो याहि सुखेन त्वं कपोतकि ॥ २१ ॥

ब्रह्मोवाच ।

एतस्मिन्नन्तरे तत्र उलूकी ददृशे पतिम् ।
वेष्ट्यमानं याम्यपाशैर्यमदण्डेन ताडितम् ॥
उलूकी दुःखिता भूत्वा यमं प्रायाद्भयातुरा ॥ २२ ॥

उलूक्युवाच ।

त्वद्भीता अनुद्रवन्ते जना-
स्त्वद्भीता ब्रह्मचर्यं चरन्ति ।
त्वद्भीताः साधु चरन्ति धीरा-
स्त्वद्भीताः कर्मनिष्ठा भवन्ति ॥ २३ ॥
त्वद्भीता अनाशकमाचरन्ति,
ग्रामादरण्यमभि यच्चरन्ति ।
त्वद्भीताः सौम्यतामाश्रयन्ते,
त्वद्भीताः सोमपानं भजन्ते ॥

त्वद्भीताश्चान्नगोदाननिष्ठा-

स्त्वद्भीता ब्रह्मवादं वदन्ति ॥ २४ ॥

ब्रह्मोवाच ।

एवं ब्रुवत्यां तस्यां तामाह दक्षिणदिक्पतिः ॥ २५ ॥

यम उवाच ।

वरं वरय भद्रं ते दास्येऽहं मनसः प्रियम् ॥ २६ ॥

ब्रह्मोवाच ।

यमस्येति वचः श्रुत्वा सा तमाह पतिव्रता ॥ २७ ॥

उलूक्युवाच ।

भर्ता मे वेष्टितः पाशैर्दण्डेनाभिहतस्तव ।
तस्माद्रक्ष सुरश्रेष्ट पुत्रान्भर्तारमेव च ॥ २८ ॥

ब्रह्मोवाच ।

तद्वाक्यात्कृपया युक्तो यमः प्राह पुनः पुनः ॥ २९ ॥

यम उवाच ।

पाशानां चापि दण्डस्य स्थानं वद शुभानने ॥ ३० ॥

ब्रह्मोवाच ।

सा प्रोवाच यमं देवं मयि पाशास्त्वयेरिताः ।
आविशन्तु जगन्नाथ दण्डो मय्येव संविशेत् ॥
ततः प्रोवाच भगवान्यमस्तां कृपया पुनः ॥ ३१ ॥

यम उवाच ।

तव भर्ता च पुत्राश्च सव जीवन्तु विज्वराः ॥ ३२ ॥

ब्रह्मोवाच ।

न्यवारयद्यमः पाशानाग्नेयास्त्रं तु हव्यवाट् ।
कपोतोलूकयोश्चापि प्रीतिं वै चक्रतुः सुरौ ॥
आहतुश्च द्विजन्मानौ व्रियतां वर ईप्सितः ॥ ३३ ॥

पक्षिणावूचतुः ।

भवतोर्दर्शनं लब्धं वैरव्याजेन दुष्करम् ।
वयं च पक्षिणः पापाः किं वरेण सुरोत्तमौ ॥ ३४ ॥
अथ देयो वरोऽस्माकं भवद्भ्यां प्रीतिपूर्वकम् ।
नाऽऽत्मार्थमनुयाचावो दीयमानं वरं शुभम् ॥ ३५ ॥
आत्मार्थं यस्तु याचेत स शोच्यो हि सुरेश्वरौ ।
जीवितं सफलं तस्य यः परार्थोद्यतः सदा ॥ ३६ ॥
अग्निरापो रविः पृथ्वी धान्यानि विविधानि च ।
परार्थं वर्तनं तेषां सतां चापि विशेषतः ॥ ३७ ॥
ब्रह्मादयोऽपि हि यतो युज्यन्ते मृत्युना सह ।
एवं ज्ञात्वा तु देवेशौ वृथा स्वार्थपरिश्रमः ॥ ३८ ॥
जन्मना सह यत्पुंसां विहितं परमेष्ठिना ।
कदाचिन्नान्यथा तद्वै वृथा क्लिश्यन्ति जन्तवः ॥ ३९ ॥
तस्माद्याचावहे किंचिद्धिताय जगतां शुभम् ।
गुणदायि तु सर्वेषां तद्युवा(युवाभ्या)मनुमन्यताम् ॥ ४० ॥

ब्रह्मोवाच ।

तावाहतुरुभौ देवौ पक्षिणौ लोकविश्रुतौ ।
धर्मस्य यशसोऽवाप्त्यै लोकानां हितकाम्यया ॥ ४१ ॥

पक्षिणावूचतुः ।

आवाभ्यामाश्रमौ तीर्थे गङ्गाया उभये तटे ।
भवेतां जगतां नाथावेष एव परो वरः ॥ ४२ ॥
स्नानं दानं जपो होमः पितॄणां चापि पूजनम् ।
सुकृती दुष्कृती वाऽपि यः करोति यथा तथा ॥
सर्वं तदक्षयं पुण्यं स्यादित्येष परो वरः ॥ ४३ ॥

देवावूचतुः ।

एवमस्तु तथाचान्यत्सुप्रीतौ तु ब्रुवावहे ॥ ४४ ॥

यम उवाच ।

उत्तरे गौतमी तीरे यमस्तोत्रं पठन्ति ये ।
तेषां सप्तसु वंशेषु नाकाले मृत्युमाप्नुयात् ॥ ४५ ॥
पुरुषो भाजनं च स्यात्सर्वदा सर्वसंपदाम् ।
यस्त्विदं पठते नित्यं मृत्युस्तोत्रं जितात्मवान् ॥ ४६ ॥
अष्टाशीतिसहस्रैश्च व्याधिभिर्न स बाध्यते ।
अस्मिंस्तीर्थ द्विजश्रेष्ठौ त्रिमासाद्गुर्विणी सती ॥ ४७ ॥
अर्वाग्वन्ध्या च षण्मासात्सप्ताहं स्नानमाचरेत् ।
वीरसूः सा भवेन्नारी शतायुः स सुतो भवेत् ॥
लक्ष्मीवान्मतिमाञ्शूरः पुत्रपौत्रविवर्धनः ।
तत्र पिण्डादिदानेन पितरो मुक्तिमाप्नुयुः ॥ ४८ ॥
मनोवाक्कायजातपापात्स्नानान्मुक्तो भवेन्नरः ॥ ४९ ॥

ब्रह्मोवाच ।

यमवाक्यादनु तथा हव्यवाडाह पक्षिणौ ॥ ५० ॥

अग्निरुवाच ।

मत्स्तोत्रं दक्षिणे तीरे ये पठन्ति यतव्रताः ।
तेषामारोग्यमैश्वर्यं लक्ष्मीं रूपं ददाम्यहम् ॥ ५१ ॥
इदं स्तोत्रं तु यः कश्चिद्यत्र क्वापि पठेन्नरः ।
नैवाग्नितो भयं तस्य लिखितेऽपि गृहे स्थिते ॥ ५२ ॥
स्नानं दानं च यः कुर्यादग्नितीर्थे शुचिर्नरः ।
अग्निष्टोमफलं तस्य भवेदेव न संशयः ॥ ५३ ॥

ब्रह्मोवाच ।

ततः प्रभृति तत्तीर्थं याम्यमाग्नेयमेव च ।
कपोतं च तथोलूकं हेत्युलूकं विदुर्बुधाः ॥ ५४ ॥
तत्र त्रीणि सहस्राणि तावन्त्येव शतानि च ।
पुनर्नवतितीर्थानि प्रत्येकं मुक्तिभाजनम् ॥ ५५ ॥
तेषु स्नानेन दानेन प्रेतीभूताश्च ये नराः ।
पूतास्ते पुत्रवित्ताढ्या आक्रमेयुर्दिवं शुभाः ॥ ५६ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये यमाग्न्यादिनवत्युत्तरत्रिशताधिकत्रिसहस्रतीर्थवर्णनं नाम पञ्चविंशाधिकशततमोऽध्यायः ॥ १२५ ॥

गौतमीमाहात्म्ये षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

———

# अथ षड्विंशाधिकशततमोऽध्यायः ।

## तपस्तीर्थवर्णनम्

तपस्तीर्थमिति ख्यातं तपोवृद्धिकरं महत् ।
सर्वकामप्रदं पुण्यं पितॄणां प्रीतिवर्धनम् ॥ १ ॥
तस्मिंस्तीर्थे तु यद्वृत्तं शृणु पापप्रणाशनम् ।
अपामग्नेश्च संवादमृषीणां च परस्परम् ॥ २ ॥
अपो ज्येष्ठतमाः केचिन्मेनिरेऽग्निं तथाऽपरे ।
एवं ब्रुवन्तो मुनयः संवादं चाग्निवारिणोः ॥ ३ ॥
विनाऽग्निं जीवनं क स्याज्जीवभूतो यतोऽनलः ।
आत्मभूतो हव्यभूतश्चाग्निना जायतेऽखिलम् ॥ ४ ॥
अग्निना ध्रियते लोको ह्यग्निर्ज्योतिर्मयं जगत् ।
तस्मादग्नेः परं नास्ति पावनं दैवतं महत् ॥ ५ ॥
अन्तर्ज्योतिः स एवोक्तः परं ज्योतिः स एव हि ।
विनाऽग्निना किंचिदस्ति यस्य धाम जगत्त्रयम् ॥ ६ ॥
तस्मादग्नेः परं नास्ति भूतानां ज्यैष्ठ्यभाजनम् ।
योपित्क्षेत्रेऽर्पितं बीजं पुरुषेण यथा तथा ॥ ७ ।
तस्य देहादिका भक्तिः कृशानोरेव नान्यथा ।
देवानां हि मुखं वह्निस्तस्मान्नातः परं विदुः ॥ ८ ॥
अपरे तु ह्यपां ज्यैष्ठ्यं मेनिरे वेदवादिनः ।
अद्भिः संपत्स्यते ह्यन्नं शुचिरद्भिः प्रजायते ॥ ९ ॥

अद्भिरेव धृतं सर्वमापो वै मातरः स्मृताः ।
त्रैलोक्यजीवनं वारि वदन्तीति पुराविदः ॥ १० ॥
उत्पन्नममृतं ह्यद्भ्यस्ताभ्यश्चौषधिसंभवः ।
अग्निर्ज्येष्ठ इति प्राहुरापो ज्येष्ठतमाः परे ॥ ११ ॥
एवं मीमांसमानास्ते ऋषयो वेदवादिनः ।
विरुद्धवादिनो मां च समभ्येत्येदमब्रुवन् ॥ १२ ॥

ऋषय ऊचुः ।

अग्नेरपां वद ज्यैष्ठ्यं त्रैलोक्यस्य भवान्प्रभुः ॥ १३ ॥

ब्रह्मोवाच ।

अहमप्यब्रवं प्राप्तानृषीन्सर्वान्यतव्रतान् ।
उभौ पूज्यतमौ लोक उभाभ्यां जायते जगत् ॥ १४ ॥
उभाभ्यां जायते हव्यं कव्यं चामृतमेव च ।
उभाभ्यां जीवनं लोके शरीरस्य च धारणम् ॥ १५ ॥
नानयोश्च विशेषोऽस्ति ततो ज्यैष्ठ्यं समं मतम् ।
ततो मद्वचनाज्ज्यैष्ठ्यमुभयोर्नैव कस्यचित् ॥ १६ ॥
ज्यैष्ठ्यमन्यतरस्येति मेनिरे ऋषिसत्तमाः ।
न तृप्ता मम वाक्येन जग्मुर्वायुं तपस्विनः ॥ १७ ॥

मुनय ऊचुः ।

कस्य ज्यैष्ठ्यं भवान्प्राणो वायो सत्यं त्वयि स्थितम् ॥१८॥

ब्रह्मोवाच ।

वायुराहानलो ज्येष्ठः सर्वमग्नौ प्रतिष्ठितम् ।
नेत्युक्त्वाऽन्योन्यमृषयो जग्मुस्तेऽपि वसुंधराम् ॥ १९ ॥

मुनय ऊचुः ।

सत्यं भूमे वद ज्यैष्ठ्यमाधाराऽसि चराचरे ॥ २० ॥

ब्रह्मोवाच ।

भूमिरप्याह विनयादागतांस्तानृषीनिदम् ॥ २१ ॥

भूमिरुवाच ।

ममाप्याधारभूताः स्युरापो देव्यः सनातनाः ।
अद्भ्यस्तु जायते सर्वं ज्यैष्ठ्यमप्सु प्रतिष्ठितम् ॥ २२ ॥

ब्रह्मोवाच ।

नेत्युक्त्वाऽन्योन्यमृषयो जग्मुः क्षीरोदशायिनम् ।
तुष्टुवुर्विविधैः स्तोत्रैः शङ्खचक्रगदाधरम् ॥ २३ ॥

ऋषय ऊचुः ।

यो वेद सर्वं भुवनं भविष्य-
द्यज्जायमानं च गुहानिविष्टम् ।
लोकत्रयं चित्रविचित्ररूप-
मन्ते समस्तं च यमाविवेश ॥ २४ ॥

यदक्षरं शाश्वतमप्रमेयं,
यं वेदवेद्यमृषयो वदन्ति ।
यमाश्रिताः स्वेप्सितमाप्नुवन्ति,
तद्वस्तु सत्यं शरणं व्रजामः ॥ २५ ॥

भूतं महाभूतजगत्प्रधानं ,
न विन्दते योगिनो विष्णुरूपम् ।

तद्वक्तुमेते ऋषयोऽत्र याताः,
सत्यं वदस्वेह जगन्निवास ॥ २६ ॥
त्वमन्तरात्माऽखिलदेहभाजां,
त्वमेव सर्वं त्वयि सर्वमीश ।
तथाऽपि जानन्ति न केऽपि कुत्रा-
प्यहो भवन्तं प्रकृतिप्रभावात् ॥
अन्तर्बहिः सर्वत एव सन्तं,
विश्वात्मना संपरिवर्तमानम् ॥ २७ ॥

ब्रह्मोवाच ।

ततः प्राह जगद्धात्री दैवी वागशरीरिणी ॥ २८ ॥

दैवी वागुवाच ।

उभावाराध्य तपसा भक्त्या च नियमेन च ।
यस्य स्यात्प्रथमं सिद्धिस्तद्भूतं ज्येष्ठमुच्यते ॥ २९ ॥

ब्रह्मोवाच ।

तथेत्युक्त्वा ययुः सर्वे ऋषयो लोकपूजिताः ।
श्रान्ताः खिन्नान्तरात्मानः परं वैराग्यमाश्रिताः ॥ ३० ॥
सर्वलोकैकजननीं भुवनत्रयपावनीम् ।
गौतमीमगमन्सर्वे तपस्तप्तुं यतव्रताः ॥ ३१ ॥
अब्दैवतं तथाऽग्निं च पूजनायोद्यतास्तदा ।
अग्नेश्च पूजका ये च अपां वै पूजने स्थिताः ॥
तत्र वागब्रवीद्दैवी वेदमाता सरस्वती ॥ ३२ ॥

दैवी वागुवाच ।

अग्नेरापस्तथा योनिरद्भिः शौचमवाप्यते ।
अग्नेश्च पूजका ये च विनाऽद्भिः पूजनं कथम् ॥ ३३ ॥

अप्सु जातासु सर्वत्र कर्मण्यधिकृतो भवेत् ।
तावत्कर्मण्यनर्होऽयमशुचिर्मलिनो नरः ॥ ३४ ॥
न मग्नः श्रद्धया यावदप्सु शीतासु वेदवित् ।
तस्मादापो वरिष्ठाः स्युर्मातृभूता यतः स्मृताः ॥
तस्माज्ज्यैष्ठ्यमपामेव जनन्योऽग्नेर्विशेषतः ॥ ३५ ॥

ब्रह्मोवाच ।

एतद्वचः शुश्रुवुस्ते ऋषयो वेदवादिनः ।
निश्चयं च ततश्चक्रुर्भवेज्ज्यैष्ठ्यमपामिति ॥ ३६ ॥
यत्र तीर्थे वृत्तमिदमृषिसत्रे च नारद ।
तपस्तीर्थं तु तत्प्रोक्तं सत्रतीर्थं तदुच्यते ॥ ३७ ॥
अग्नितीर्थं च तत्प्रोक्तं तथा सारस्वतं विदुः ।
तेषु स्नानं च दानं च सर्वकामप्रदं शुभम् ॥ ३८ ॥
चतुर्दश शतान्यत्र तीर्थानां पुण्यदायिनाम् ।
तेषु स्नानं च दानं च स्वर्गमोक्षप्रदायकम् ॥ ३९ ॥
कृतं संदेहहरणमृषीणां यत्र भाषया ।
सरस्वत्यभवत्तत्र गङ्गया संगता नदी ॥
माहात्म्यं तस्य को वक्तुं संगमस्य क्षमो नरः ॥ ४० ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये तपस्तीर्थादि-
चतुर्दशशततीर्थवर्णनं नाम षड्विंशाधिक-
शततमोऽध्यायः ॥ १२६ ॥

गौतमीमाहात्म्ये सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

—

# अथ सप्तविंशाधिकशततमोऽध्यायः ।

## देवतीर्थवर्णनम्

ब्रह्मोवाच ।

देवतीर्थमिति ख्यातं गङ्गाया उत्तरे तटे।
तस्य प्रभावं वक्ष्यामि सर्वपापप्रणाशनम् ॥ १ ॥
आर्ष्टिषेण इति ख्यातो राजा सर्वगुणान्वितः ।
तस्य भार्या जया नाम साक्षाल्लक्ष्मीरिवापरा ॥ २ ॥
तस्य पुत्रो भरो नाम मतिमान्पितृवत्सलः ।
धनुर्वेदे च वेदे च निष्णातो दक्ष एव च ॥ ३ ॥
तस्य भार्या रूपवती सुप्रभेत्यभिविश्रुता ।
आर्ष्टिषेणस्ततो राजा पुत्रे राज्यं निवेश्य सः ॥ ४ ॥
पुरोधसा च मुख्येन दीक्षां चक्रे नरेश्वरः ।
सरस्वत्यास्ततस्तीरे हयमेधाय यत्नवान् ॥ ५ ॥
ऋत्विग्भिर्ऋषिमुख्यैश्च वेदशास्त्रपरायणैः ।
दीक्षितं तं नृपश्रेष्ठं ब्राह्मणाग्निसमीपतः ॥ ६ ॥
मिथुर्दानवराट्शूरः पापबुद्धिः प्रतापवान् ।
मखं विध्वस्य नृपतिं सभार्यं सपुरोहितम् ॥ ७ ॥
आदाय वेगात्स प्रागाद्रसातलतलं मुने ।
नीते तस्मिन्नृपवरे यज्ञे नष्टे ततोऽमराः ॥ ८ ॥
ऋत्विजश्च ययुः सर्वे स्वं स्वं स्थानं मखात्ततः ।
पुरोहितसुतो राज्ञो देवापिरिति विश्रुतः ॥ ९ ॥

बालस्तां मातरं दृष्ट्वा आत्मनः पितरं न च।
दृष्ट्वा सविस्मयो भूत्वा दुःखितोऽतीव चाभवत् ॥ १० ॥
स मातरं तु पप्रच्छ पिता मे क्व गतोऽम्बिके।
पितृहीनो न जीवेयं मातः सत्यं वदस्व मे ॥ ११ ॥
धिग्धिक्पितृविहीनानां जीवितं पापकर्मणाम्।
न वक्षि यदि मे मातर्जलमग्निमथाऽऽविशे ॥ १२ ॥
पुत्रं प्रोवाच सा माता राज्ञो भार्या पुरोधसः।
दानवेन तलं नीतो राज्ञा सह पिता तव ॥ १३ ॥

देवापिरुवाच।

क्व नीतः केन वा नीतः कथं नीतः क्व कर्मणि।
केषु पश्यत्सु किं स्थानं दानवस्य वदस्व मे ॥ १४ ॥

मातोवाच।

दीक्षितं यज्ञसदसि सभार्यं सपुरोधसम्।
राजानं तं मिथुर्दैत्यो नीतवान्स रसातलम् ॥
पश्यत्सु देवसंघेषु वह्निब्राह्मणसंनिधौ ॥ १५ ॥

ब्रह्मोवाच।

तन्मातृवचनं श्रुत्वा देवापिः कृत्यमस्मरत्।
देवान्पश्येऽथवाऽग्निं वा ऋत्विजो वाऽसुरांस्तथा ॥ १६ ॥
एतेष्वेव पिताऽन्वेष्यो नान्यत्रेति मतिर्मम।
इति निश्चित्य देवापिर्मरं प्राह नृपात्मजम् ॥ १७ ॥

देवापिरुवाच ।

तपसा ब्रह्मचर्येण व्रतेन नियमेन च ।
आनेतव्या मया सर्वे नीता ये च रसातलम् ॥ १८ ॥
जाते पराभवे घोरे यो न कुर्यात्प्रतिक्रियाम् ।
नराधमेन किं तेन जीवता वा मृतेन वा ॥ १९ ॥
त्वं प्रशाधि महीं कृत्स्नामार्ष्टिषेणः पिता यथा ।
माता मम त्वया पाल्या राजन्यावन्ममाऽऽगतिः ॥
भवेच्च कृतकार्यस्य अनुजानीहि मां भर ॥ २० ॥

ब्रह्मोवाच ।

भरेणोक्तः स देवापिः सर्वं निश्चित्य यत्नतः ॥ २१ ॥

भर उवाच ।

सिद्धिं कुरु सुखं याहि मा चिन्तामल्पिकां भज ॥ २२ ॥

ब्रह्मोवाच ।

ततो देवापिरमरराजाङ्घ्रिध्यानतत्परः ।
ऋत्विजोऽन्वेष्य यत्नेन नत्वा तानृत्विजः पृथक् ॥
कृताञ्जलिपुटो बालो देवापिर्वाक्यमब्रवीत् ॥ २३ ॥

देवापिरुवाच ।

भवद्भिश्च मखो रक्ष्यो यजमानश्च दीक्षितः ।
पुरोधाश्च तथा रक्ष्यः पत्नी या दीक्षितस्य तु ॥ २४ ॥
भवत्सु तत्र तश्यत्सु यज्ञं विध्वस्य दैत्यराट् (ऋत्विजः) ।
राजादयस्तेन नीतास्तन्न युक्ततमं भवेत् ॥ २५ ॥

अथाप्येतदहं मन्ये भवन्तस्तानरोगिणः ।
दातुमर्हन्ति तान्स(वै स)र्वानन्यथा शापमर्हथ ॥ २६ ॥

ऋत्विज ऊचुः ।

मखेऽग्निः प्रथमं पूज्यो ह्यग्निरेवात्र दैवतम् ।
तस्माद्वयं न जानीमो ह्यग्नीनां परिचारकाः ॥ २७ ॥
स एव दाता भोक्ता च हर्ता कर्ता च हव्यवाट् ॥ २८ ॥

ब्रह्मोवाच ।

ऋत्विजः पृष्ठतः कृत्वा देवापिर्जातवेदसम् ।
पूजयित्वा यथान्यायमग्नये तन्न्यवेदयत् ॥ २९ ॥

अग्निरुवाच ।

यथर्त्विजस्तथा चाहं देवानां परिचारकः ।
हव्यं वहामि देवानां भोक्तारो रक्षकाश्च ते ॥ ३० ॥

देवापिरुवाच ।

देवानाहूय यत्नेन हविर्भागान्पृथक्पृथक् ।
दास्येऽहमेष दोषो मे तस्माद्याहि सुरान्प्रति ॥ ३१ ॥

ब्रह्मोवाच ।

देवापिः स सुरान्प्राप्य नत्वा तेभ्यः पृथक्पृथक् ।
ऋत्विग्वाक्यं त्वाग्निवाक्यं शापं चापि न्यवेदयत् ॥ ३२ ॥

देवा ऊचुः ।

आहूता वैदिकैर्मन्त्रैर्ऋत्विग्भिश्च यथाक्रमम् ।
भोक्ष्यामहे हविर्भागान्न स्वतन्त्रा द्विजोत्तम ॥ ३३ ॥

तस्माद्वेदानुगा नित्यं वयं वेदेन चोदिताः ।
परतन्त्रास्ततो विप्र वेदेभ्यस्तन्निवेदय ॥ ३४ ॥

ब्रह्मोवाच ।

स देवापिः शुचिर्भूत्वा वेदानाहूय यत्नतः ।
ध्यानेन तपसा युक्तो वेदाश्चापि पुरोऽभवन् ॥ ३५ ॥
वेदानुवाच देवापिर्नमस्य तु पुनः पुनः ।
ऋत्विग्वाक्यं चाग्निवाक्यं देववाक्यं न्यवेदयत् ॥ ३६ ॥

वेदा ऊचुः ।

परतन्त्रा वयं तात ईश्वरस्य वशानुगाः ।
अशेषजगदाधारो निराधारो निरञ्जनः ॥ ३७ ॥
सर्वशक्त्यैकसदनं निधानं सर्वसंपदाम् ।
स तु कर्ता महादेवः संहर्ता स महेश्वरः ॥ ३८ ॥
वयं शब्दमया ब्रह्मन्वदामो विद्म एव च ।
अस्माकमेतत्कृत्यं स्याद्वदामो यत्तु पृच्छसि ॥ ३९ ॥
केन नीतास्तस्य नाम तत्पुरं तद्बलं तथा ।
भक्षिताः किंतु नो नष्टा एतज्जानीमहे वयम् ॥ ४० ॥
यथा च तव सामर्थ्यं यमाराध्य च यत्र च ।
स्यादित्येतच्च जानीमो यथा प्राप्स्यसि तान्पुरः ॥ ४१ ॥

ब्रह्मोवाच ।

एतच्छ्रुत्वाऽवदद्वेदान्विचार्य सुचिरं हृदि ॥ ४२ ॥

देवापिरुवाच ।

वेदा वदन्त्वेतदेव सर्वमेव यथार्थतः ।
सर्वान्प्राप्स्ये तलं नीतानलं तेभ्यो नमोऽस्तु वः ॥ ४३ ॥

वेदा ऊचुः ।

गौतमीं गच्छ देवापे तत्र स्तुहि महेश्वरम् ।
सुप्रसन्नस्तवाभीष्टं दास्यत्येव कृपाकरः ॥ ४४ ॥
भवेद्देवः शिवः प्रीतः स्तुतः सत्यं महामते ।
आर्ष्टिषेणश्च नृपतिस्तस्य जाया जया सती ॥ ४५ ॥
पिता तवाप्युपमन्युस्तले तिष्ठन्त्यरोगिणः ।
वरदानान्महेशस्य मिथुं हत्वा च राक्षसम् ॥
यशः प्राप्स्यसि धर्मं च एतच्छक्यं न चेतरत् ॥ ४६ ॥

ब्रह्मोवाच ।

तद्वेदवचनाद्बालो देवापिर्गौतमीं गतः ।
स्नात्वा कृतक्षणो विप्रस्तुष्टाव च महेश्वरम् ॥ ४७ ॥

देवापिरुवाच ।

बालोऽहं देवदेवेश गुरूणां त्वं गुरुर्मम ।
न मे शक्तिस्त्वत्स्तवने तुभ्यं शंभो नमोऽस्तु ते ॥ ४८ ॥
न त्वां जानन्ति निगमा न देवा मुनयो न च ।
न ब्रह्मा नापि वैकुण्ठो योऽसि सोऽसि नमोऽस्तु ते ॥ ४९ ॥
येऽनाथा ये च कृपणा ये दरिद्राश्च रोगिणः ।
पापात्मानो ये च लोके तांस्त्वं पासि महेश्वर ॥ ५० ॥
तपसा नियमैर्मन्त्रैः पूजितास्त्रिदिवौकसः ।
त्वया दत्तं फलं तेभ्यो दास्यन्ति जगतां पते ॥ ५१ ॥
याचितारश्च दातारस्तेभ्यो यद्यन्मनीषितम् ।
भवतीति न चित्रं स्यात्त्वं विपर्ययकारकः ॥ ५२ ॥

येऽज्ञानिनो ये च पापा ये मग्ना नरकार्णवे ।
शिवेति वचनान्नाथ तान्पासि त्वं जगद्गुरो ॥ ५३ ॥

ब्रह्मोवाच ।

एवं तु स्तुवतस्तस्य पुरः प्राह त्रिलोचनः ॥ ५४ ॥

शिव उवाच ।

वरं ब्रूह्यथ देवापे अलं दैन्येन बालक ॥ ५५ ॥

देवापिरुवाच ।

राजानं राजपत्नीं च पितरं च गुरुं मम ।
प्राप्तुमिच्छे जगन्नाथ निधनं च रिपोर्मम ॥ ५६ ॥

ब्रह्मोवाच ।

देवापिवचनं श्रुत्वा तथेत्याहाखिलेश्वरः ।
देवापेः सर्वमभवदाज्ञया शंकरस्य तत् ॥ ५७ ॥
पुनरप्याह तं(आहूय स्वगणं)शंभुर्देवापिकरुणाकरः ।
नन्दिनं प्रेषयामास शंभुः(ततः)शूलेन नारद ॥ ५८ ॥
रसातलं मिथुं नन्दी हत्वा चासुरपुंगवान् ।
तत्पित्रादीन्समानीय तस्मै तान्स न्यवेदयत् ॥ ५९ ॥
हयमेधश्च तत्राऽऽसीदार्ष्टिषेणस्य धीमतः ।
अग्निश्च ऋत्विजो देवा वेदाश्च ऋषयोऽब्रुवन् ॥ ६० ॥

अग्न्यादय ऊचुः ।

यत्र साक्षादभूच्छंभुर्देवापे भक्तवत्सलः ।
देवदेवो जगन्नाथो देवतीर्थमभूच्च तत् ॥ ६१ ॥

सर्वपापक्षयकरं सर्वसिद्धिप्रदं नृणाम् ।
पुण्यदं तीर्थमेतत्स्यात्तव कीर्तिश्च शाश्वती ॥ ६२ ॥

ब्रह्मोवाच ।

अश्वमेधे निवृत्ते तु सुरास्तेभ्यो वरान्ददुः ।
स्नात्वा कृतार्था गङ्गायां ततस्ते दिवमाक्रमन् ॥ ६३ ॥
ततः प्रभृति तत्राऽऽसंस्तीर्थानि दश पञ्च च ।
सहस्राणि शतान्यष्टावुभयोरपि तीरयोः ॥
तेषु स्नानं च दानं च ह्यतीव फलदं विदुः ॥ ६४ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्य आर्ष्टिषेणाद्यष्टोत्तर-
शताधिकपञ्चदशसहस्रतीर्थवर्णनं नाम
सप्तविंशाधिकशततमोऽध्यायः ॥ १२७ ॥
गौतमीमाहात्म्येऽष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

## अथाष्टाविंशाधिकशततमोऽध्यायः ।

### तपोवनादितीर्थवर्णनम्

ब्रह्मोवाच ।

तपोवनमिति ख्यातं नन्दिनीसंगमं तथा ।
सिद्धेश्वरं तत्र तीर्थं गौतम्या दक्षिणे तटे ॥ १ ॥
शार्दूलं चेति विख्यातं तेषां वृत्तमिदं शृणु ।
यस्याऽऽकर्णनमात्रेण सर्वपापैः प्रमुच्यते ॥ २ ॥

अग्निर्होता पुरा त्वासीद्देवानां हव्यवाहनः ।
भार्यां प्राप्तो दक्षसुतां स्वाहानाम्नीं सुरूपिणीम् ॥ ३ ॥
साऽनपत्या पुरा चाऽसीत्पुत्रार्थं तप आविशत् ।
तपश्चरन्तीं विपुलं तोषयन्तीं हुताशनम् ॥
स भर्ता हुतभुक्प्राह भार्यां स्वाहामनिन्दिताम् ॥ ४ ॥

अग्निरुवाच ।

अपत्यानि भविष्यन्ति मा तपः कुरु शोभने ॥ ५ ॥

ब्रह्मोवाच ।

एतच्छ्रुत्वा भर्तृवाक्यं निवृत्ता तपसोऽभवत् ।
स्त्रीणामभीष्टदं नान्यद्भर्तृवाक्यं विना क्वचित् ॥ ६ ॥
ततः कतिपये काले तारकाद्भय आगते ।
अनुत्पन्ने कार्तिकेये चिरकालरहोगते ॥ ७ ॥
महेश्वरे भवान्या च त्रस्ता देवाः समागताः ।
देवानां कार्यसिद्ध्यर्थमग्निं प्रोचुर्दिवौकसः ॥ ८ ॥

देवा ऊचुः ।

देव गच्छ महाभाग शंभुं त्रैलोक्यपूजितम् ।
तारकाद्भयमुत्पन्नं शंभवे त्वं निवेदय ॥ ९ ॥

अग्निरुवाच ।

न गन्तव्यं तत्र देशे दंपत्योः स्थितयो रहः ।
सामान्यमात्रतो न्यायः किं पुनः शूलपाणिनि ॥ १० ॥
एकान्तस्थितयोः स्वैरं जल्पतोर्यः सरागयोः ।
दंपत्योः शृणुयाद्वाक्यं निरयात्तस्य नोद्धृतिः ॥ ११ ॥

स स्वाम्यखिललोकानां महाकालस्त्रिशूलवान् ।
निरीक्षणीयः केन स्याद्भवान्या रहसि स्थितः ॥ १२ ॥

देवा ऊचुः ।

महाभये चानुगते न्यायः कोऽन्यत्र वर्ण्यते ।
तारकाद्भय आपन्ने गच्छ त्वं तारको भवान् ॥ १३ ॥
महाभयाब्धौ साधूनां यत्परार्थाय जीवितम् ।
रूपेणान्येन वा गच्छ वाचं वद यथा तथा ॥ १४ ॥
विश्राव्य देववचनं शंभुमागच्छ सत्वरः ।
ततो दास्यामहे पूजामुभयोर्लोकयोः कवे ॥ १५ ॥

ब्रह्मोवाच ।

शुको भूत्वा जगामाऽऽशु देववाक्याद्धुताशनः ।
यत्राऽऽसीज्जगतां नाथो रममाणस्तदोमया ॥ १६ ॥
स भीतवदथ प्रायाच्छुको भूत्वा तदाऽनलः ।
नाशकद्द्वारदेशे तु प्रवेष्टुं हव्यवाहनः ॥ १७ ॥
ततो गवाक्षदेशे तु तस्थौ धुन्वन्नधोमुखः ।
तं दृष्ट्वा प्रहसञ्शंभुरुमां प्राह रहोगतः ॥ १८ ॥

शंभुरुवाच ।

पश्य देवि शुकं प्राप्तं देववाक्याद्धुताशनम् ॥ १९ ॥

ब्रह्मोवाच ।

लज्जिता चावदद्देवमलं देवेति पार्वती ।
पुरश्चरन्तं देवेशो ह्यग्निं तं द्विजरूपिणम् ॥ २० ॥

आहूय बहुशश्चापि ज्ञातोऽस्यग्नेऽत्र मा वद ।
विदारयस्व स्वमुखं गृहाणेदं नयस्व तत् ॥ २१ ॥

इत्युक्त्वा तस्य चाऽऽस्येऽग्ने रेतः स प्राक्षिपद्बहु ।
रेतोगर्भस्तदा चाग्निर्गन्तुं नैव च शक्तवान् ॥ २२ ॥

सुरनद्यास्ततस्तीरं श्रान्तोऽग्निरुपतस्थिवान् ।
कृत्तिकासु च तद्रेतः प्रक्षेपात्कार्तिकोऽभवत् ॥ २३ ॥

अवशिष्टं च यत्किंचिदग्नेर्देहे च शांभवम् ।
तदेव रेतो वह्निस्तु स्वभार्यायां द्विधाऽक्षिपत् ॥ २४ ॥

स्वहायां प्रियभूतायां पुत्रार्थिन्यां विशेषतः ।
पुरा साऽऽश्वासिता तेन संततिस्ते भविष्यति ॥ २५ ॥

तद्वह्निनाऽथ संस्मृत्य तत्क्षिप्तं शांभवं महः ।
तदग्ने रेतसस्तस्यां जज्ञे मिथुनमुत्तमम् ॥ २६ ॥

सुवर्णश्च सुवर्णा च रूपेणाप्रतिमं भुवि ।
अग्नेः प्रीतिकरं नित्यं लोकानां प्रीतिवर्धनम् ॥ २७ ॥

अग्निः प्रीत्या सुवर्णां तां प्रादाद्धर्माय धीमते ।
सुवर्णस्याथ पुत्रस्य संकल्पामकरोत्प्रियाम् ॥
एवं पुत्रस्य पुत्र्याश्च विवाहमकरोत्कविः ॥ २८ ॥

अन्योन्यरेतोव्यतिषङ्गदोषा-
दग्नेरपत्यमुभयं तथैव ।
पुत्रः सुवर्णो बहुरूपरूपी,
रूपाणि कृत्वा सुरसत्तमानाम् ॥ २९ ॥

इन्द्रस्य वायोर्धनदस्य भार्यां,
जलेश्वरस्यापि मुनीश्वराणाम् ।
भार्यास्तु गच्छत्यनिशं सुवर्णा,
यस्याः प्रियं यच्च वपुः स कृत्वा ॥ ३० ॥

याति क्वचिच्चापि कवेस्तनूज-
स्तद्भर्तृरूपं च पतिव्रतासु ।
कृत्वाऽनिशं ताभिरुदारभावः,
कुर्वन्कृतार्थं मदनं स रेमे ॥ ३१ ॥

कृत्वा गता क्वापि चैवं सुवर्णा,
धर्मस्य भार्याऽपि सुवर्णनाम्नी ।
स्वाहासुता स्वैरिणी सा बभूव,
यस्यापि यस्यापि मनोगता या ॥ ३२ ॥

भार्यास्वरूपा सैव भूत्वा सुवर्णा,
रेमे पतीन्मानुषानासुरांश्च ।
देवानृषीन्पितृरूपांस्तथाऽन्या-
न्रूपौदार्यस्थैर्यगाम्भीर्ययुक्तान् ॥ ३३ ॥

याऽभिप्रेता यस्य देवस्य भार्या,
तद्रूपा सा रमते तेन सार्धम् ।
नानाभेदैः करणैश्चाप्यनेकै-
राकर्षन्ती तन्मनःकामसिद्धिम् ॥ ३४ ॥

एवं सुवर्णस्य निरीक्ष्य चेष्टा-
मग्नेःसूनोः पुत्रिकायास्तथाऽग्नेः ।

सर्वे च शेपुः कुपितास्तदाऽग्नेः,
पुत्रं च पुत्रीं च सुरासुरास्ते ॥ ३५ ॥

सुरासुरा ऊचुः ।

कृतं यदेतद्व्यभिचाररूपं,
यच्छद्मना वर्तनं पापरूपम् ।
तस्मात्सुतस्ते व्यभिचारवांश्च,
सर्वत्र गामी जायतां हव्यवाह ॥ ३६ ॥
तथा सुवर्णाऽपि न चैकनिष्ठा,
भूयादग्ने नैकतृप्ता बहूंश्च ।
नानाजातीन्निन्दितान्देहभाजो,
भजित्री स्यादेष दोषश्च पुत्र्याः ॥ ३७ ॥

ब्रह्मोवाच ।

इत्येतच्छापवचनं श्रुत्वाऽग्निरतिभीतवत् ।
मामभ्येत्य तदोवाच निष्कृतिं वद पुत्रयोः ॥ ३८ ॥
तदाऽहमब्रवं वह्ने गौतमीं गच्छ शंकरम् ।
स्तुत्वा तत्र महाबाहो निवेदय जगत्पतेः ॥ ३९ ॥
माहेश्वरेण वीर्येण तव देहस्थितेन च ।
एवंविधं त्वपत्यं ते जातं वह्ने ततो भवान् ॥ ४० ॥
निवेदयस्व (तु) देवाय देवानां शापमीदृशम् ।
स्वापत्यरक्षणायासौ शंभुः श्रेयः करिष्यति ॥ ४१ ॥
स्तुहि देवं च देवीं च भक्त्या प्रीतो भवेच्छिवः ।
ततस्त्वपत्यविषये प्रियान्कामानवाप्स्यसि ॥ ४२ ॥

ततो मद्वचनादग्निर्गङ्गां गत्वा महेश्वरम् ।
तुष्टाव नियतो वाक्यैः स्तुतिभिर्वेदसंमितैः ॥ ४३ ॥

अग्निरुवाच ।

विश्वस्य जगतो धाता विश्वमूर्तिर्निरञ्जनः ।
आदिकर्ता स्वयंभूश्च तं नमामि जगत्पतिम् ॥ ४४ ॥
योऽग्निर्भूत्वा संहरति स्रष्टा वै जलरूपतः ।
सूर्यरूपेण यः पाति तं नमामि च त्र्यम्बकम् ॥ ४५ ॥

ब्रह्मोवाच ।

ततः प्रसन्नो भगवाननन्तः शंभुरव्ययः ।
वरेण च्छन्दयामास पावकं सुरपूजितम् ॥ ४६ ॥
स विनीतः शिवं प्राह तव वीर्यं मयि स्थितम् ।
तेन जातः सुतो रम्यः सुवर्णो लोकविश्रुतः ॥ ४७ ॥
तथा सुवर्णा पुत्री च तस्मादेव जगत्प्रभो ।
अन्योन्यवीर्यसङ्गाच्च तद्दोषादुभयं त्विदम् ॥ ४८ ॥
व्यभिचारात्सदोषं च अपत्यमभवच्छिव ।
शापं ददुः सुराः सर्वे तयोः शान्तिं कुरु प्रभो ॥ ४९ ॥
तदग्निवचनाच्छम्भुः प्रोवाचेदं शुभोदयम् ॥ ५० ॥

शंभुरुवाच ।

मद्वीर्यादभवत्तत्तः सुवर्णो भूरिविक्रमः ।
समग्रा ऋद्धयः सर्वाः सुवर्णेऽस्मिन्समाहिताः ॥ ५१ ॥
भविष्यन्ति न संदेहो वह्ने शृणु वचो मम ।
त्रयाणामपि लोकानां पावनः स भविष्यति ॥ ५२ ॥

स एव चामृतं लोके स एव सुरवल्लभः ।
स एव भुक्तिमुक्ती च स एव मखदक्षिणा ॥ ५३ ॥
स एव रूपं सर्वस्य गुरूणामप्यसौ गुरुः ।
वीर्यं श्रेष्ठतमं विद्याद्वीर्यं मत्तो यदुत्तमम् ॥ ५४ ॥
विशेषतस्त्वयि क्षिप्तं तस्य का स्याद्विचारणा ।
हीनं तेन विना सर्वं संपूर्णास्तेन संपदः ॥ ५५ ॥
जीवन्तोऽपि मृताः सर्वे सुवर्णेन विना नराः ।
निर्गुणोऽपि धनी मान्यः सगुणोऽप्यधनो नहि ॥ ५६ ॥
तस्मान्नातः परं किंचित्सुवर्णाद्धि भविष्यति ।
तथा चैषा सुवर्णाऽपि स्यादुत्कृष्टाऽपि चञ्चला ॥ ५७ ॥
अनया वीक्षितं सर्वं न्यूनं पूर्णं भविष्यति ।
तपसा जपहोमैश्च येयं प्राप्या जगत्त्रये ॥ ५८ ॥
तस्याः प्रभावं प्राशस्त्यमग्ने किंचिच्च कीर्त्यते ।
सर्वत्र या तु संतिष्ठेदायातु विचरिष्यति ॥ ५९ ॥
सुवर्णा कमला साक्षात्पवित्रा च भविष्यति ।
अद्य प्रभृत्यात्मजयोस्तथा स्वैरं विचेष्टतोः ॥ ६० ॥
तथाऽपि चैतयोः पुण्यं न भूतं न भविष्यति ॥ ६१ ॥

ब्रह्मोवाच ।

एवमुक्त्वा ततः शंभुः साक्षात्तत्राभवच्छिवः ।
लिङ्गरूपेण सर्वेषां लोकानां हितकाम्यया ॥ ६२ ॥
वरान्प्राप्य सुताभ्यां स अग्निस्तुष्टोऽभवत्ततः ।
स्वभर्त्रा च सुवर्णा सा धर्मेणाग्निसुता मुदा ॥ ६३ ॥

वर्तयामास पुत्रोऽपि वह्नेः संकल्पया मुदा ।
एतस्मिन्नन्तरे स्वर्णामग्नेर्दुहितरं मुने ॥ ६४ ॥
परिभूय च धर्मं तं शार्दूलो दानवेश्वरः ।
अहरद्भाग्यसौभाग्यविलासवसतिं छलात् ॥ ६५ ॥
नीता रसातलं तेन सुवर्णा लोकविश्रुता ।
जामाताऽग्नेः स धर्मश्च अग्निश्चैव स हव्यवाट् ॥ ६६ ॥
विष्णवे लोकनाथाय स्तुत्वा चैव पुनः पुनः ।
कार्यविज्ञापनं चोभौ चक्रतुः प्रभविष्णवे ॥ ६७ ॥
ततश्चक्रेण चिच्छेद शार्दूलस्य शिरो हरिः ।
साऽऽनीता विष्णुना देवी सुवर्णा लोकसुन्दरी ॥ ६८ ॥
महेश्वरसुता चैव अग्नेश्चैव तथा प्रिया ।
महेश्वराय तां विष्णुर्दर्शयामास नारद ॥ ६९ ॥
प्रीतोऽभवन्महेशोऽपि सस्वजे तां पुनः पुनः ।
चक्रं प्रक्षालितं यत्र शार्दूलच्छेदि दीप्तिमत् ॥ ७० ॥
चक्रतीर्थं तु विख्यातं शार्दूलं चेति तद्विदुः ।
यत्र नीता सुवर्णा सा विष्णुना शंकरान्तिकम् ॥ ७१ ॥
तत्तीर्थं शांकरं ज्ञेयं वैष्णवं सिद्धमेव तु ।
यत्राऽऽनन्दमनुप्राप्तो ह्यग्निर्धर्मश्च शाश्वतः ॥ ७२ ॥
आनन्दाश्रूणि न्यपतन्यत्राग्नेर्मुनिसत्तम ।
आनन्देति नदी जाता तथा वै नन्दिनीति च ॥ ७३ ॥
तस्याश्च संगमः पुण्यो गङ्गायां तत्र वै शिवः ।
तत्रैव संगमे साक्षात्सुवर्णाऽद्यापि संस्थिता ॥ ७४ ॥

दाक्षायणी सैव शिवा आग्नेयी चेति विश्रुता ।
अम्बिका जगदाधारा शिवा कात्यायनीश्वरी ॥ ७५ ॥
भक्ताभीष्टप्रदा नित्यमलंकृत्योभयं तटम् ।
तपस्तेपे यत्र चाग्निस्तत्तीर्थं तु तपोवनम् ॥ ७६ ॥
एवमादीनि तीर्थानि तीरयोरुभयोर्मुने ।
तेषु स्नानं च दानं च सर्वकामप्रदं शुभम् ॥ ७७ ॥
उत्तरे चैव पारे च सहस्राणि चतुर्दश ।
दक्षिणे च तथा पारे सहस्राण्यथ षोडश ॥ ७८ ॥
तत्र तत्र च तीर्थानि साभिज्ञानानि सन्ति वै ।
नामानि च पृथक् सन्ति संक्षेपात्तन्मयोच्यते ॥ ७९ ॥
एतानि यश्च शृणुयाद्यश्च वा पठति स्मरेत् ।
सर्वेषु तत्र काम्येषु परिपूर्णो भवेन्नरः ॥ ८० ॥
एतद्वृत्तं तु यो ज्ञात्वा तत्र स्नानादिकं चरेत् ।
लक्ष्मीवाञ्जायते नित्यं धर्मवांश्च विशेषतः ॥ ८१ ॥
अब्जकात्पश्चिमे तीर्थं तच्छार्दूलमुदाहृतम् ।
वाराणस्यादितीर्थेभ्यः सर्वेभ्यो ह्यधिकं भवेत् ॥ ८२ ॥
तत्र स्नात्वा पितॄन्देवान्वन्दते तर्पयत्यपि ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ८३ ॥
तपोवनाच्च शार्दूलान्मध्ये तीर्थान्यशेषतः ।
तस्यैकैकस्य माहात्म्यं न केनाप्यत्र वर्ण्यते ॥ ८४ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये तपोवननन्दिनी-

संगमेश्वरदेवीदाक्षायणीसिद्धेश्वरवैष्णवशार्दूलाग्निचक्रतीर्थादित्रिशतसहस्रतीर्थवर्णनं नामाष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

गौतमीमाहात्म्य एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

## अथैकोनत्रिंशदधिकशततमोऽध्यायः ।

### इन्द्रतीर्थवर्णनम्

ब्रह्मोवाच ।

इन्द्रतीर्थमिति ख्यातं तत्रैव च वृषाकपम् ।
फेनायाः संगमो यत्र हनूमतं तथैव च ॥ १ ॥
अब्जकं चापि यत्प्रोक्तं यत्र देवस्त्रिविक्रमः ।
तत्र स्नानं च दानं च पुनरावृत्तिदुर्लभम् ॥ २ ॥
तत्र वृत्तान्यथाऽऽख्यास्ये गङ्गाया दक्षिणे तटे ।
इन्द्रेश्वरं चोत्तरे च शृणु भक्त्या यतव्रतः ॥ ३ ॥
नमुचिर्बलवानासीदिन्द्रशत्रुर्मदोत्कटः ।
तस्येन्द्रेणाभवद्युद्धं फेनेनेन्द्रोऽहरच्छिरः ॥ ४ ॥
अपां च नमुचेः शत्रोस्तत्फेनवज्ररूपधृक् ।
शिरश्छित्वा तच्च फेनं गङ्गाया दक्षिणे तटे ॥ ५ ॥
न्यपतद्भूमिं भित्त्वा तु रसातलमथाऽऽविशत् ।
रसातलभवं गाङ्गं वारि यद्विश्वपावनम् ॥ ६ ॥

वज्रादिष्टेन मार्गेण व्यगमद्भूमिमण्डलम् ।
तज्जलं फेननाम्ना तु नदी फेनेति गद्यते ॥ ७ ॥
तस्यास्तु संगमः पुण्यो गङ्गया लोकविश्रुतः ।
सर्वपापक्षयकरो गङ्गायमुनयोरिव ॥ ८ ॥
हनूमदुपमाता वै यत्राऽऽप्लवनमात्रतः ।
मार्जारत्वादभून्मुक्ता विष्णुगङ्गाप्रसादतः ॥ ९ ॥
मार्जारं चेति तत्तीर्थं पुरा प्रोक्तं मया तव ।
हनूमतं च तत्प्रोक्तं तत्राऽऽख्यानं पुरोदितम् ॥ १० ॥
वृषाकपं चाब्जकं च तत्रेदं प्रयतः शृणु ।
हिरण्य इति विख्यातो दैत्यानां पूर्वजो बली ॥ ११ ॥
तपस्तप्त्वा सुरैः सर्वैरजेयोऽभूत्सुदारुणः ।
तस्यापि बलवान्पुत्रो देवानां दुर्जयः सदा ॥ १२ ॥
महाशनिरिति ख्यातस्तस्य भार्या पराजिता ।
तेनेन्द्रस्याभवद्युद्धं बहुकालं निरन्तरम् ॥ १३ ॥
महाशनिर्महावीर्यः सततं रणमूर्धनि ।
जित्वा नागेन सहितं शक्रं पित्रे न्यवेदयत् ॥ १४ ॥
बद्ध्वा हस्तिसमायुक्तं स्वसारं वीक्ष्य तां तदा ।
विहाय क्रूरतां दैत्यो हिरण्याय न्यवेदयत् ॥ १५ ॥
महाशनिपिता दैत्यः पूर्वेषां पूर्ववत्तरः ।
शचीकान्तं तले स्थाप्य तस्य रक्षामथाकरोत् ॥ १६ ॥
महाशनिर्हरिं जित्वा जेतुं वरुणमभ्यगात् ।
वरुणोऽपि महाबुद्धिः प्रादात्कन्यां महाशनेः ॥ १७ ॥

उदधिं स्वालयं प्रादाद्वरुणस्तु महाशनेः ।
तयोश्च सख्यमभवद्वरुणस्य महाशनेः ॥ १८ ॥
वारुणी चापि या कन्या सा प्रियाऽभून्महाशनेः ।
वीर्येण यशसा चापि शौर्येण च बलेन च ॥ १९ ॥
महाशनिर्महादैत्यस्त्रैलोक्ये नोपमीयते ।
निरिन्द्रत्वं गते लोके देवाः सर्वे न्यमन्त्रयन् ॥ २० ॥

देवा ऊचुः ।

विष्णुरेवेन्द्रदाता स्याद्दैत्यहन्ता स एव च ।
मन्त्रद्रष्टा स एव स्यादिन्द्रं चान्यं करिष्यति ॥ २१ ॥

ब्रह्मोवाच ।

एवं संमन्त्र्य ते देवा विष्णोर्मन्त्रं न्यवेदयन् ।
ममावध्यो महादैत्यो महाशनिरिति ब्रुवन् ॥ २२ ॥
प्रायाद्वारीश्वरं विष्णुः श्वशुरं वरुणं तदा ।
केशवो वरुणं गत्वा प्राहेन्द्रस्य पराभवम् ॥ २३ ॥
तथा त्वयैतत्कर्तव्यं यथाऽऽयाति पुरंदरः ।
तद्विष्णुवचनाच्छीघ्रं ययौ जलपतिर्मुने ॥ २४ ॥
सुतापतिं हिरण्यसुतं विक्रान्तं तं महाशनिम् ।
अतिसंमानितस्तेन जामात्रा वरुणः प्रभुः ॥ २५ ॥
पप्रच्छाऽऽगमनं दैत्यो विनयाच्छ्वशुरं तदा ।
वरुणः प्राह तं दैत्यं यदागमनकारणम् ॥ २६ ॥

वरुण उवाच ।

इन्द्रं देहि महाबाहो यस्त्वया निर्जितः पुरा ।
बद्धं रसातलस्थं तं देवानामधिपं सखे ॥ २७ ॥
अस्माकं सर्वदा मान्यं देहि त्वं मम शत्रुहन् ।
बद्ध्वा विमोक्षणं शत्रोर्महते यशसे सताम् ॥ २८ ॥

ब्रह्मोवाच ।

तथेत्युक्त्वा कथंचित्स दैत्येशो वरुणाय तम् ।
प्रादादिन्द्रं शचीकान्तं वारणेन समन्वितम् ॥ २९ ॥

स दैत्यमध्येऽतिविराजमानो,
हरिं तदोवाच जलेशसंनिधौ ।
संपूज्य चैवाथ महोपचारै-
र्महाशनिर्मघवन्तं बभाषे ॥ ३० ॥

महाशनिरुवाच ।

केन त्वमिन्द्रोऽद्य कृतोऽसि केन,
वीर्यं तवेदृग्बहु भाषसे च ।
त्वं संगरे शत्रुभिर्बाध्यसे च,
तथाऽपि चेन्द्रो भवसीति चित्रम् ॥ ३१ ॥
अथापि बद्धा पुरुषेण काचि-
त्तस्याःपतिस्तां मोचयतीति युक्तम् ।
स्त्रियोऽस्वतन्त्राः पुरुषप्रधानास्त्वं,
वै पुमान्भविता शक्र साधो ॥ ३२ ॥

बद्धो मया संगरे वाहनेन,
काप्यस्त्रं ते वज्रमुद्दामशक्ति ।
चिन्तारत्नं नन्दनं योषितस्ता,
यशो बलं देवराजोपभोग्यम् ॥
सर्वं हि त्वा (त्वं) किंतु मुक्तो जलेशा-
दाकाङ्क्षसे जीवितं धिक्तवेदम् ॥ ३३ ॥
तज्जीवनं यत्तु यशोनिधानं,
स एव मृत्युर्यशसो यद्विरोधि ।
एवं जानञ्शक्र कथं जलेशा-
न्मुक्तिं प्राप्तो नैव लज्जां भजेथाः ॥ ३४ ॥
त्रिविष्टपस्थः परवेष्टितः स-,
न्सर्वैः सुरैः कान्तया वीज्यमानः ।
संस्तूयमानश्च तथाऽप्सरोभि-
र्नूनं लज्जा ते बिभेतीति मन्ये ॥ ३५ ॥
त्वं वृत्रहा नमुचेश्चापि हन्ता,
पुरां भेत्ता गोत्रभिद्वज्रबाहुः ।
एवं सुरास्त्वां परिपूजयन्ती-
त्यतो जिष्णो सर्वमेतत्त्यजस्व ॥ ३६ ॥
विकारमाप्याप्यहितोद्भवं ये,
जीवन्ति लोकाननुसंविशन्ति ।
भवादृशां दुश्च्यवनाब्जजन्मा,
कथं न हृद्भेदमवाप कर्ता ॥ ३७ ॥

ब्रह्मोवाच ।

एवमुक्त्वा तु दैत्येशो वरुणाय महात्मने ।
प्रादादिन्द्रं पुनश्चेदं वचनं तदभाषत ॥ ३८ ॥

महाशनिरुवाच ।

अद्य प्रभृत्यसौ शिष्य इन्द्रः स्माद्वरुणो गुरुः ।
श्वशुरो मम येन त्वं मुक्तिमाप्तोऽसि वासव ॥ ३९ ॥
तथा त्वं भृत्यभावेन वर्तेथा वरुणं प्रति ।
नो चेद्बद्ध्वापुनस्त्वां वै क्षेप्स्ये स्वैव रसातलम् ॥ ४० ॥

ब्रह्मोवाच ।

एवं निर्भर्त्स्य तं शक्रं हसंश्चापि पुनः पुनः ।
अब्रवीद्गच्छ गच्छेति वरुणं चानुमन्यतु ॥ ४१ ॥
स तु प्राप्तः स्वनिलयं लज्जया कलुषीकृतः ।
पौलोम्यां प्राह तत्सर्वं यत्तच्छत्रुपराभवम् ॥ ४२ ॥

इन्द्र उवाच ।

एवमुक्तः कृतश्चैव शत्रुणाऽहं वरानने ।
निर्वापयामि येन स्वमात्मानं सुभगे वद ॥ ४३ ॥

इन्द्राण्युवाच ।

दानवानामथोद्भूतिं शक्र मायां पराभवम् ।
वरदानं तथा मृत्युं जानेऽहं बलसूदन ॥ ४४ ॥
तस्माद्यस्मात्तस्य मृत्युरथवापि पराभवः ।
जायेत शृणु तत्सर्वं वक्ष्येऽहं प्रीतये तव ॥ ४५ ॥

हिरण्यस्य सुतो वीरः पितृव्यस्य सुतो बली ।
तस्मान्मम स्यात्स भ्राता वरदानाच्च दर्पितः ॥ ४६ ॥
ब्रह्माणं तोषयामास तपसा नियमेन च ।
ईदृशं बलमापन्नं तपसा किं न सिध्यति ॥ ४७ ॥
तस्मात्त्वया चित्तरागो विस्मयो वा कथंचन ।
न कार्यः शृणु तत्रेदं कार्यं यत्तु क्रमागतम् ॥ ४८ ॥

ब्रह्मोवाच ।

एवमुक्त्वा तु पौलोमी प्राहेन्द्रं विनयान्विता ॥ ४९ ॥

इन्द्राण्युवाच ।

नासाध्यमस्ति तपसो नासाध्यं यज्ञकर्मणः ।
नासाध्यं लोकनाथस्य विष्णोर्भक्त्या हरस्य च ॥ ५० ॥
पुनश्चेदं मया कान्त श्रुतमस्त्यतिशोभनम् ।
स्त्रीणां स्वभावं जानन्ति स्त्रिय एव सुराधिप ॥ ५१ ॥
तस्माद्भूमेस्तथा चापां नासाध्यं विद्यते प्रभो ।
तपो वा यज्ञकर्मादि ताभ्यामेव यतो भवेत् ॥ ५२ ॥
तत्रापि तीर्थभूता तु या भूमिस्तां व्रजेद् भवान् ।
तत्र विष्णुं शिवं पूज्य सर्वान्कामानवाप्स्यसि ॥ ५३ ॥
श्रुतमस्ति पुनश्चेदं स्त्रियो याश्च पतिव्रताः ।
ता एव सर्वं जानन्ति धृतं ताभिश्चराचरम् ॥ ५४ ॥
पृथिव्यां सारभूतं स्यात्तन्मध्ये दण्डकं वनम् ।
तत्र गङ्गा जगद्धात्री तत्रेशं पूजय प्रभो ॥ ५५ ॥

विष्णुं वा जगतामीशं दीनार्तार्तिहरं विभुम् ।
अनाथानामिह नृणां मज्जतां दुःखसागरे ॥ ५६ ॥
हरो हरिर्वा गङ्गा वा काप्यन्यच्छरणं नहि ।
तस्मात्सर्वप्रयत्नेन तोषयैतान्समाहितः ॥ ५७ ॥
भक्त्या स्तोत्रैश्च तपसा कुरु चैव मया सह ।
ततः प्राप्स्यसि कल्याणमीशविष्णुप्रसादजम् ॥ ५८ ॥
अज्ञात्वैकगुणं कर्म फलं दास्यति कर्मिणः ।
ज्ञात्वा शतगुणं तत्स्याद्भार्यया च तदक्षयम् ॥ ५९ ॥
पुंसः सर्वेषु कार्येषु भार्यैवेह सहायिनी ।
स्वल्पानामपि कार्याणां नहि सिद्धिस्तया विना ॥ ६० ॥
एकेन यत्कृतं कर्म तस्मादर्धफलं भवेत् ।
जायया तु कृतं नाथ पुष्कलं पुरुषो लभेत् ॥ ६१ ॥
तस्मादेतत्सुविदितमर्धो जाया इति श्रुतेः ।
श्रूयते दण्डकारण्ये सरिच्छ्रेष्ठाऽस्ति गौतमी ॥ ६२ ॥
अशेषाघप्रशमनी सर्वाभीष्टप्रदायिनी ।
तस्माद्गच्छ मया तत्र कुरु पुण्यं महाफलम् ॥ ६३ ॥
ततः शत्रून्निहत्याऽऽजौ महत्सुखमवाप्स्यसि ॥ ६४ ॥

ब्रह्मोवाच ।

तथेत्युक्त्वा स गुरुणा भार्यया च शतक्रतुः ।
ययौ गङ्गां जगद्धात्रीं गौतमीं चेति विश्रुताम् ॥ ६५ ॥
दण्डकारण्यमध्यस्थां ययौ स (द्रष्ट्वा तां) प्रीतिमान्हरिः ।
तपः कर्तुं मनश्चक्रे देवदेवाय शंभवे ॥ ६६ ॥

गङ्गां नत्वा तु प्रथमं स्नात्वा च स कृताञ्जलिः।
शिवैकशरणो भूत्वा स्तोत्रं चेदं ततोऽब्रवीत्॥ ६७॥

इन्द्र उवाच।

स्वमायया यो ह्यखिलं चराचरं,
सृजत्यवत्यत्ति न सज्जतेऽस्मिन्।
एकः स्वतन्त्रोऽद्वयचित्सुखात्मकः,
स नः प्रसन्नोऽस्तु पिनाकपाणिः॥ ६८॥
न यस्य तत्त्वं सनकादयोऽपि,
जानन्ति वेदान्तरहस्यविज्ञाः।
स पार्वतीशः सकलाभिलाष-
दाता प्रसन्नोऽस्तु ममान्धकारिः॥ ६९॥
सृष्ट्वा स्वयंभूर्भगवान्विरिञ्चि,
भयंकरं चास्य शिरोऽन्वपश्यत्।
छित्त्वा नखाग्रैर्नखसक्तमेत-
च्चिक्षेप तस्मादभवत्त्रिवर्गः॥ ७०॥
पापं दरिद्रं त्वथ लोभयाञ्चे,
मोहो विपच्चेति ततोऽप्यनन्तम्।
जातप्रभावं भवदुःखरूपं,
बभूव तैर्व्याप्तमिदं समस्तम्॥ ७१॥
अवेक्ष्य सर्वं चकितः सुरेशो,
देवीमवोचज्जगदस्तमेति।

त्वं पाहि लोकेश्वरि लोकमात-
रमे शरण्ये सुभगे सुभद्रे ॥ ७२ ॥
जगत्प्रतिष्ठे वरदे जय त्वं,
भुक्तिः समाधिः परमा च मुक्तिः ।
स्वाहा स्वधा स्वस्तिरनादिसिद्धि-
र्गीर्बुद्धिरासीरजरामरे त्वम् ॥ ७३ ॥
विद्यादिरूपेण जगत्त्रये त्वं,
रक्षां करोष्येव मदाज्ञया च ।
त्वयैव सृष्टं भुवनत्रयं स्या-
द्यतः प्रकृत्यैव तथैव चित्रम् ॥ ७४ ॥
इत्येवमुक्ता दयिता हरेण,
संश्लेषसंलापपरा बभूव ।
श्रान्ता भवस्यार्धतनौ सुलग्ना,
चिक्षेप च स्वेदजलं कराग्रैः ॥ ७५ ॥
तस्माद्बभूव प्रथमं स धर्मो,
लक्ष्मीरथो दानमथो सुवृष्टिः ।
सत्त्वं सुसंपन्नधरं सरांसि,
धान्यानि पुष्पाणि फलानि चैव ॥ ७६ ॥
सौभाग्यवस्तूनि वपुः सुवेषः,
शृङ्गारभाजीनि महौषधानि ।
नृत्यानि गीतान्यमृतं पुराणं,
श्रुतिस्मृती नीतिरथान्नपाने ॥ ७७ ॥

शस्त्राणि शास्त्राणि गृहोपयोग्या-

न्यस्त्राणि तीर्थानि च काननानि।

इष्टानि पूर्तानि च मङ्गलानि,

यानानि शुभ्राभरणासनानि ॥ ७८ ॥

भवाङ्गसंसर्गसुसंप्रहास-

सुस्वेदसंलापरहःप्रकारैः।

तथैव जातं सचराचरं च,

अपापकं देवि ततश्च जातम् ॥ ७९ ॥

सुखं प्रभूतं च शुभं च नित्यं,

विराजि चैतत्तव देवि भावात्।

तस्मात्तु मां रक्ष जगज्जनित्रि,

भीतं भयेभ्यो जगतां प्रधाने ॥ ८० ॥

एके तर्कैर्विमुह्यन्ति लीयन्ते तत्र चापरे।
शिवशक्त्योस्तदाऽद्वैतं सुन्दरं नौमि विग्रहम् ॥ ८१ ॥

ब्रह्मोवाच।

एवं तु स्तुवतस्य पुरस्तादभवच्छिवः ॥ ८२ ॥

शिव उवाच।

किमभीष्टं वरयसे हरे वद परायणम् ॥ ८३ ॥

इन्द्र उवाच।

बलवान्मे रिपुश्चाऽऽसीद्दर्शनैश्च शनिर्यथा।
तेन बद्धस्तलं नीतः परिभूतस्त्वनेकधा ॥ ८४ ॥

वाक्सायकैस्तथा विद्धस्तद्वधाय त्वियं कृतिः ।
तदर्थं जगतामीश येन जेष्ये रिपुं प्रभो ॥ ८५ ॥

तदेव देहि वीर्यं मे यच्चान्यद्रिपुनाशनम् ।
जातः पराभवो यस्मात्तद्विनाशे कृते सति ॥
पुनर्जातमहं मन्ये वरं कीर्तिर्जयश्रियोः ॥ ८६ ॥

ब्रह्मोवाच ।

स शिवः शक्रमाहेदं न मयैकेन ते रिपुः ।
वधमाप्नोति तस्मात्त्वं विष्णुमप्यव्ययं हरिम् ॥ ८७ ॥

आराधयस्व पौलोम्या सह देवं जनार्दनम् ।
लोकत्रयैकशरणं नारायणमनन्यधीः ॥ ८८ ॥

ततः प्राप्स्यसि तस्माच्च मत्तश्चापि प्रियं हरे ।
पुनश्चोवाच भगवानादिकर्ता महेश्वरः ॥ ८९ ॥

मन्त्राभ्यासस्तपो वापि योगाभ्यसनमेव च ।
संगमे यत्र कुत्रापि सिद्धिदं मुनयो विदुः ॥ ९० ॥

किं पुनः संगमे विप्र गौतमीसिन्धुफेनयोः ।
गिरीणां गह्वरे यद्वा सरितामथ संगमे ॥ ९१ ॥

विप्रो श्रियैव भवति मुकुन्दाङ्घ्रिनिविष्टया ।
गङ्गाया दक्षिणे तीर आपस्तम्बो मुनीश्वरः ॥ ९२ ॥

आस्ते तस्याप्यहं तोषमगमं बलसूदन ।
तेन त्वं भार्यया चैव तोषयस्व गदाधरम् ॥ ९३ ॥

ब्रह्मोवाच ।

आपस्तम्बेन सहितो गङ्गाया दक्षिणे तटे ।
तुष्टाव देवं प्रयतः स्नात्वा पुण्येऽथ संगमे ॥ ९४ ॥
फेनायाश्चैव गङ्गायास्तत्र देवं जनार्दनम् ।
वैदिकैर्विविधैर्मन्त्रैस्तपसाऽतोषयत्तदा ॥ ९५ ॥
ततस्तुष्टोऽभवद्विष्णुः किं देयं चेत्यभाषत ।
देहि मे शत्रुहन्तारमित्याह भगवान्हरिः ॥ ९६ ॥
दत्तमित्येव जानीहि तमुवाच जनार्दनः ।
तत्राभवच्छिवस्यैव गङ्गाविष्ण्वोः प्रसादतः ॥ ९७ ॥
अम्भसा पुरुषो जातः शिवविष्णुस्वरूपधृक् ।
चक्रपाणिः शूलधरः स गत्वा तु रसातलम् ॥ ९८ ॥
निजघान तदा दैत्यमिन्द्रशत्रुं महाशनिम् ।
सखाऽभवत्स चेन्द्रस्य अब्जकः स वृषाकपिः ॥ ९९ ॥
दिविस्थोऽपि सदा चेन्द्रस्तमन्वेति वृषाकपिम् ।
कुपिता प्रणयेनाभूदन्यासक्तं विलोक्य तम् ॥
शचीं तां सान्त्वयन्नाह शतमन्युर्हसन्निदम् ॥ १०० ॥

इन्द्र उवाच ।

नाहमिन्द्राणि शरणमृते सख्युर्वृषाकपेः ।
वारि वाऽपि हविर्यस्य अग्नेः प्रियकरं सदा ॥ १०१ ॥
नाहमन्यत्र गन्ताऽस्मि प्रिये चाङ्गेन ते शपे ।
तस्मान्नार्हसि मां वक्तुं शङ्कयाऽन्यत्र भामिनि ॥ १०२ ॥

पतिव्रता प्रिया मे त्वं धर्मे मन्त्रे सहायिनी ।
सापत्या च कुलीना च त्वत्तोऽन्या का प्रिया मम ॥ १०३ ॥
तस्मात्तवोपदेशेन गङ्गां प्राप्य महानदीम् ।
प्रसादाद्देवदेवस्य विष्णोर्वै चक्रपाणिनः ॥ १०४ ॥
तथा शिवस्य देवस्य प्रसादाच्च वृषाकपेः ।
जलोद्भवाच्च मे मित्रादब्जकाल्लोकविश्रुतात् ॥ १०५ ॥
उत्तीर्णदुःखः सुभगे इत इन्द्रोऽहमच्युतः ।
किं न साध्यं यत्र भार्या भर्तृचित्तानुगामिनी ॥ १०६ ॥
दुष्करा तत्र नो मुक्तिः किंत्वर्थादित्रयं शुभे ।
जायैव परमं मित्रं लोकद्वयहितैषिणी ॥ १०७ ॥

सा चेत्कुलीना प्रियभाषिणी च,
पतिव्रता रूपवती गुणाढ्या ।
संपत्सु चाऽऽपत्सु समानरूपा,
तया ह्यसाध्यं किमिह त्रिलोक्याम् ॥ १०८ ॥

तस्मात्तव धिया कान्ते ममेदं शुभमागतम् ।
इतस्तवोदितं चैव कर्तव्यं नान्यदस्ति मे ॥ १०९ ॥
परलोके च धर्मेच सत्पुत्रसदृशं न च ।
आर्तस्य पुरुषस्येह भार्यावद्भेषजं न हि ॥ ११० ॥
निःश्रेयसपदप्राप्त्यै तथा पापस्य मुक्तये ।
गङ्गया सदृशं नास्ति शृणु चान्यद्वरानने ॥ १११ ॥
धर्मार्थकाममोक्षाणां प्राप्तये पापमुक्तये ।
शिवविष्णवोरनन्यत्वज्ञानान्नास्त्यत्र मुक्तये ॥ ११२ ॥

तस्मात्तव धिया साध्वि सर्वमेतन्मनोगतम् ।
अवाप्तं च शिवाद्विष्णोर्गङ्गायाश्च प्रसादतः ॥ ११३ ॥
इन्द्रत्वं मे स्थिरं चेतो मन्ये मित्रबलात्पुनः ।
वृषाकपिर्मम सखा यो जातस्त्वप्सु भामिनि ॥ ११४ ॥
त्वं च प्रियसखी नित्यं नान्यत्प्रियतरं मम ।
तीर्थानां गौतमी गङ्गा देवानां हरिशंकरौ ॥ ११५ ॥
तस्मादेभ्यः प्रसादेन सर्वं चेप्सितमाप्तवान् ।
मम प्रीतिकरं चेदं तीर्थं त्रैलोक्यविश्रुतम् ॥ ११६ ॥
तस्मादेतद्धि याचिष्ये देवान्सर्वाननुक्रमात् ।
अनुमन्यन्तु ऋषयो गङ्गा च हरिशंकरौ ॥ ११७ ॥
इन्द्रेश्वरे चाब्जके च उभयोस्तीरयोः सुराः ।
एकत्र शंकरो देवो ह्यपरत्र जनार्दनः ॥ ११८
पावयन्दण्डकारण्यं साक्षाद्विष्णुस्त्रिविक्रमः ।
अन्तरे यानि तीर्थानि सर्वपुण्यप्रदानि च ॥ ११९ ॥
अत्र तु स्नानमात्रेण सर्वे ते मुक्तिमाप्नुयुः ।
पापिष्ठाः पापतो मुक्तिमाप्नुयुर्ये च धर्मिणः ॥ १२० ॥
तेषां तु परमा मुक्तिः पितृभिः पञ्चपञ्चभिः ।
अत्र किंचिच्च ये दद्युरर्थिभ्यस्तिलमात्रकम् ॥ १२१ ॥
दातृभ्यो ह्यक्षयं तत्स्यात्कामदं मोक्षदं तथा ।
धन्यं यशस्यमायुष्यमारोग्यं पुण्यवर्धनम ॥ १२२ ॥
आख्यानं विष्णुशंभ्वोश्च ज्ञात्वा स्नानाच्च मुक्तिदम् ।
अस्य तीर्थस्य माहात्म्यं ये शृण्वन्ति पठन्ति च ॥ १२३ ॥

पुण्यभाजो भवेयुस्ते तेभ्योऽत्रैव स्मृतिर्भवेत् ।
शिवविष्ण्वोरशेषाघसंघविच्छेदकारिणी ॥
यां प्रार्थयन्ति मुनयो विजितेन्द्रियमानसाः ॥ १२४ ॥

ब्रह्मोवाच ।

भविष्यत्येवमेवेति तं देवा ऋषयोऽब्रुवन् ।
गौतम्या उत्तरे पारे तीर्थानां मोक्षदायिनाम् ॥ १२५ ॥
देवर्षिसिद्धसेव्यानां सहस्राण्यथ सप्त वै ।
तथैव दक्षिणे तीरे तीर्थान्येकादशैव तु ॥ १२६ ॥
अब्जकं हृदयं प्रोक्तं गोदावर्या मुनीश्वरैः ।
विश्रामस्थानमीशस्य विष्णोर्ब्रह्मण एव च ॥ १२७ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये गौतम्युत्तरकूलस्थेन्द्रेश्वरादिसप्तसहस्रतीर्थदक्षिणकूलस्थापस्तम्बसोमेश्वरफेनासंगमवृषाकपाब्जकवैष्णवहनूमत्तीर्थमार्जारेत्याद्येकादशतीर्थवर्णनं नामैकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥
गौतमीमाहात्म्ये षष्टितमोऽध्यायः ॥ ६० ॥

---

# अथ त्रिंशदधिकशततमोऽध्यायः ।

## आपस्तम्बतीर्थवर्णनम्

ब्रह्मोवाच ।

आपस्तम्बमिति ख्यातं तीर्थं त्रैलोक्यविश्रुतम् ।
स्मरणादप्यशेषाघसंघविध्वंसनक्षमम् ॥ १ ॥

आपस्तम्बो महाप्राज्ञो मुनिरासीन्महायशाः ।
तस्य भार्याऽक्षसूत्रेति पतिधर्मपरायणा ॥ २ ॥
तस्य पुत्रो महाप्राज्ञः कर्किनामाऽथ तत्त्ववित् ।
तस्याऽऽश्रममनुप्राप्तो ह्यगस्त्यो मुनिसत्तमः ॥ ३ ॥
तमगस्त्यं पूजयित्वा आपस्तम्बो मुनीश्वरः ।
शिष्यैरनुगतो धीमांस्तं प्रष्टुमुपचक्रमे ॥ ४ ॥

आपस्तम्ब उवाच ।

त्रयाणां को नु पूज्यः स्याद्देवानां मुनिसत्तम ।
भुक्तिर्मुक्तिश्च कस्माद्वा स्यादनादिश्च को भवेत् ॥ ५ ॥
अनन्तश्चापि को विप्र देवानामपि दैवतम् ।
यज्ञैः क इज्यते देवः को वेदेष्वनुगीयते ॥
एतं मे संशयं छेत्तुं वदागस्त्य महामुने ॥ ६ ॥

अगस्त्य उवाच ।

धर्मार्थकाममोक्षाणां प्रमाणं शब्द उच्यते ।
तत्रापि वैदिकः शब्दः प्रमाणं परमं मतः ॥ ७ ॥
वेदेन गीयते यस्तु पुरुषः स परात्परः ।
मृतोऽपरः स विज्ञेयो ह्यमृतः पर उच्यते ॥ ८ ॥
योऽमूर्तः स परो ज्ञेयो ह्यपरो मूर्त उच्यते ।
गुणाभिव्याप्तिभेदेन मूर्तोऽसौ त्रिविधो भवेत् ॥ ९ ॥
ब्रह्मा विष्णुः शिवश्चेति एक एव त्रिधोच्यते ।
त्रयाणामपि देवानां वेद्यमेकं परं हि तत् ॥ १० ॥

एकस्य बहुधा व्याप्तिर्गुणकर्मविभेदतः ।
लोकानामुपकारार्थमाकृतित्रितयं भवेत् ॥ ११ ॥
यस्तत्त्वं वेत्ति परमं स च विद्वान्न चेतरः ।
तत्र यो भेदमाचष्टे लिङ्गभेदी स उच्यते ॥ १२ ॥
प्रायश्चित्तं न तस्यास्ति यश्चैषां व्याहरेद्भिदम् ।
त्रयाणामपि देवानां मूर्तिभेदः पृथक्पृथक् ॥ १३ ॥
वेदाः प्रमाणं सर्वत्र साकारेषु पृथक्पृथक् ।
निराकारं च यत्त्वेकं तत्तेभ्यः परमं मतम् ॥ १४ ॥

आपस्तम्ब उवाच ।

नानेन निर्णयः कश्चिन्मयाऽत्र विदितो भवेत् ।
तत्राप्यत्र रहस्यं यत्तद्विमृश्याऽऽशु कीर्त्यताम् ॥
निःसंशयं निर्विकल्पं भाजनं सर्वसंपदाम् ॥ १५ ॥

ब्रह्मोवाच ।

एतदाकर्ण्य भगवानगस्त्यो वाक्यमब्रवीत् ॥ १६ ॥

अगस्त्य उवाच ।

यद्यप्येषां न भेदोऽस्ति देवानां तु परस्परम् ।
तथाऽपि सर्वसिद्धिः स्याच्छिवादेव सुखात्मनः ॥ १७ ॥
प्रपञ्चस्य निमित्तं यत्तज्ज्योतिश्च परं शिवः ।
तमेव साधय हरं भक्त्या परमया मुने ॥
गौतम्यां सकलाघौघसंहर्ता दण्डके वने ॥ १८ ॥

ब्रह्मोवाच ।

एतच्छ्रुत्वा मुनेर्वाक्यं परां प्रीतिमुपागतः ।
भुक्तिदो मुक्तिदः पुंसां साकारोऽथ निराकृतिः ॥ १९ ॥

सृष्ट्याकारस्ततः शक्तः पालनाकार एव च ।
दाता च हन्ति सर्वं यो यस्मादेतत्समाप्यते ॥ २० ॥

अगस्त्य उवाच ।

ब्रह्माकृतिः कर्तृरूपा वैष्णवी पालनी तथा ।
रुद्राकृतिर्निहन्त्री सा सर्ववेदेषु पठ्यते ॥ २१ ॥

ब्रह्मोवाच ।

आपस्तम्बस्तदा गङ्गां गत्वा स्नात्वा यतव्रतः ।
तुष्टाव शंकरं देवं स्तोत्रेणानेन नारद ॥ २२ ॥

आपस्तम्ब उवाच ।

काष्ठेषु वह्निः कुसुमेषु गन्धो,
बीजेषु वृक्षादि द्रुपत्सु हेम ।
भूतेषु सर्वेषु तथाऽस्ति यो वै,
तं सोमनाथं शरणं व्रजामि ॥ २३ ॥
यो लीलया विश्वमिदं चकार,
धाता विधाता भुवनत्रयस्य ।
यो विश्वरूपः सदसत्परो यः,
सोमेश्वरं तं शरणं व्रजामि ॥ २४ ॥
यं स्मृत्य दारिद्र्यमहाभिशाप-
रोगादिभिर्न स्पृश्यते शरीरी ।
यमाश्रिताश्चेप्सितमाप्नुवन्ति,
सोमेश्वरं तं शरणं व्रजामि ॥ २५ ॥
येन त्रयीधर्ममवेक्ष्य पूर्वं,
ब्रह्मादयस्तत्र समीहिताश्च ।

एवं द्विधा येन कृतं शरीरं,
सोमेश्वरं तं शरणं व्रजामि ॥ २६ ॥

यस्मै नमो गच्छति मन्त्रपूतं,
हुतं हविर्या च कृता च पूजा ।
दत्तं हविर्येन सुरा भजन्ते,
सोमेश्वरं तं शरणं व्रजामि ॥ २७ ॥

यस्मात्परं नान्यदस्ति प्रशस्तं,
यस्मात्परं नैव सुसूक्ष्ममन्यत् ।
यस्मात्परं नो महतां महच्च,
सोमेश्वरं तं शरणं व्रजामि ॥ २८ ॥

यस्याऽऽज्ञया विश्वमिदं विचित्र-
मचिन्त्यरूपं विविधं महच्च ।
एकक्रियं यद्वदनुप्रयाति,
सोमेश्वरं तं शरणं व्रजामि ॥ २६ ॥

यस्मिन्विभूतिः सकलाधिपत्यं,
कर्तृत्वदातृत्वमहत्त्वमेव ।
प्रीतिर्यशः सौख्यमनादिधर्मः,
सोमेश्वरं तं शरणं व्रजामि ॥ ३० ॥

नित्यं शरण्यः सकलस्य पूज्यो,
नित्यं प्रियो यः शरणागतस्य ।
नित्यं शिवो यः सकलस्य रूपं,
सोमेश्वरं तं शरणं व्रजामि ॥ ३१ ॥

ब्रह्मोवाच ।

ततः प्रसन्नो भगवानाह नारद तं-
मुनि(न्वरं वृण्विति चाऽऽह त)म् ।
आत्मार्थं च परार्थं च आपस्तम्बोऽब्रवीच्छिवम् ॥ ३२ ॥
सर्वान्कामानाप्नुयुस्ते ये स्नात्वा देवमीश्वरम् ।
पश्येयुर्जगतामीशमस्त्वित्याह शिवो मुनिम् ॥ ३३ ॥
ततः प्रभृति तत्तीर्थमापस्तम्बमुदाहृतम् ।
अनाद्यविद्यातिमिरव्रातनिर्मूलनक्षमम् ॥ ३४ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये दक्षिणकूलस्था-
पस्तम्बसोमेश्वरतीर्थवर्णनं नाम त्रिंशदधिकशत
तमोऽध्यायः ॥ १३० ॥
गौतमीमाहात्म्य एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

# अथैकत्रिंशदधिकशततमोऽध्यायः ।

## यमतीर्थवर्णनम्

ब्रह्मोवाच ।

यमतीर्थमिति ख्यातं पितॄणां प्रीतिवर्धनम् ।
अशेषपापशमनं तत्र वृत्तमिदं शृणु ॥ १ ॥
तत्राऽऽख्यानमिदं त्वासीदितिहासं पुरातनम् ।
सरमेति प्रसिद्धाऽस्ति नाम्ना देवशुनी मुने ॥ २ ॥

तस्याः पुत्रौ महाश्रेष्ठौ श्वानौ नित्यं जनाननु ।
गामिनौ पवनाहारौ चतुरक्षौ यमप्रियौ ॥ ३ ॥
गा रक्षति स्म देवानां यज्ञार्थं कल्पितान्पशून् ।
रक्षन्तीमनुजग्मुस्ते राक्षसा दैत्यदानवाः ॥ ४ ॥
रक्षन्तीं तां महाप्राज्ञाः श्वानयोर्मातरं शुनीम् ।
प्रलोभयित्वा विविधैर्वाक्यैर्दानैश्च यत्नतः ५ ॥
हृता गा राक्षसैः पापैः पश्वर्थे कल्पिताः शुभाः ।
तत आगत्य सा देवानिदमाह क्रमाच्छुनी ॥ ६ ॥

सरमोवाच ।

मां बद्ध्वा राक्षसैः पाशैस्ताडयित्वा प्रहारकैः ।
नीता गा यज्ञसिद्ध्यर्थं कल्पिताः पशवः सुराः ॥ ७ ॥

ब्रह्मोवाच ।

तस्या वाचं निशम्याऽऽशु सुरान्प्राह बृहस्पतिः ॥ ८ ॥

बृहस्पतिरुवाच ।

इयं विकृतरूपाऽऽस्ते अस्याः पापं च लक्षये ।
अस्या मतेन ता गावो नीता नान्येन हेतुना ॥
पापेयं सुकृतीवेति लक्ष्यते देहचेष्टितैः ॥ ९ ॥

ब्रह्मोवाच ।

तद्गुरोर्वचनाच्छक्रः पदा तां प्राहरच्छुनीम् ।
पदाघातात्तदा तस्या मुखात्क्षीरं प्रसुस्रुवे ॥ १० ॥
पुनः प्राह शचीभर्ता क्षीरं पीतं त्वया शुनि ।
राक्षसैश्च तदा दत्तं तस्मान्नीतास्तु गा मम ॥ ११ ॥

सरमोवाच ।

नापराधोऽस्ति मे नाथ न चान्यस्यापि कस्यचित् ।
नापराधो न चोपेक्षा ममास्ति त्रिदशेश्वर ॥
तस्माद्रुष्टोऽसि किं नाथ रिपवो बलिनस्तु ते ॥ १२ ॥

ब्रह्मोवाच ।

ततो ध्यात्वा देवगुरुर्ज्ञात्वा तस्या विचेष्टितम् ।
सत्यं शक्र त्वियं दुष्टा रिपूणां पक्षकारिणी ॥ १३ ॥
ततः शशाप तां शक्रः पापिष्ठे त्वं शुनी भव ।
मर्त्यलोके पापभूता अज्ञानात्पापकारिणी ॥ १४ ॥
तदेन्द्रस्य तु शापेन मानुषे सा व्यजायत ।
यथा शप्ता मघवता पापात्सा ह्यतिभीषणा ॥ १५ ॥
गावो या राक्षसैर्नीतास्तासामानयनाय च ।
यत्नं कुर्वन्सुरपतिर्विष्णवे तन्न्यवेदयत् ॥ १६ ॥
विष्णुर्दैत्यांश्च दनुजान्गोहर्तॄंश्चैव राक्षसान् ।
हन्तुं प्रयत्नमकरोज्जगृहे च महद्धनुः ॥ १७ ॥
शार्ङ्गं यल्लोकविख्यातं दैत्यनाशनमेव च ।
जितारिः पूजितो देवैः स्वयं स्थित्वा जनार्दनः ॥ १८ ॥
यत्र वै दण्डकारण्ये शार्ङ्गपाणिर्जगत्प्रभुः ।
तत्रस्थान्दैत्यदनुजान्राक्षसांश्च बलीयसः ॥ १९ ॥
पुनर्जघ्ने स वै विष्णुर्गा यैर्नीताश्च राक्षसैः ।
तत्र वै दण्डकारण्ये शार्ङ्गपाणिरिति श्रुतः ॥ २० ॥

युध्यमानस्ततो विष्णुर्दितिजै राक्षसैः सह ।
ते जग्मुर्दक्षिणामाशां विष्णोस्त्रासान्महामुने ॥ २१ ॥
अन्वगच्छत्ततो विष्णुस्तानेव परमेश्वरः ।
गरुत्मता तानवाप्य शार्ङ्गमुक्तैर्मनोजवैः ॥ २२ ॥
बाणैस्तान्व्याहनद्विष्णुर्गङ्गाया उत्तरे तटे ।
देवारयः क्षयं नीता विष्णुना प्रभविष्णुना ॥ २३ ॥
शार्ङ्गमुक्तैर्महावेगैः सुस्वनैश्च सुमन्त्रितैः ।
क्षयं प्राप्ता विष्णुबाणैस्ततस्ते देवशत्रवः ॥ २४ ॥
गावो लब्धा यत्र देवैर्बाणतीर्थं तदुच्यते ।
वैष्णवं लोकविदितं गोतीर्थं चेति विश्रुतम् ॥ २५ ॥
पश्वर्थे कल्पिता गावो गङ्गाया दक्षिणे तटे ।
प्रद्रुतास्ते सुराः सर्वे गङ्गायां संन्यवेशयन् ॥ २६ ॥
तन्मध्ये कारयामासुर्द्वीपं चैवाऽऽश्रयं गवाम् ।
तैर्गोभिस्तत्र गङ्गायां सुरयज्ञो व्यजायत ॥ २७ ॥
यज्ञतीर्थं तु तत्प्रोक्तं गोद्वीपं गाङ्गमध्यतः ।
देवानां यजनं तच्च सर्वकामप्रदं शुभम् ॥ २८ ॥
स्वयं मूर्तिमती भूत्वा गङ्गाशक्तिर्महाद्युते ।
असारापारसंसारसागरोत्तरणे तरिः ॥ २९ ॥
विश्वेश्वरी योगमाया सद्भक्ताभयदायिनी ।
गोरक्षं तु ततस्तीर्थं गङ्गाया दक्षिणे तटे ॥ ३० ॥
तौ श्वानौ सरमापुत्रौ चतुरक्षौ यमप्रियौ ।
मातुः शापं चापराधं सर्वं चापि सविस्तरम् ॥ ३१ ॥

निवेद्य तु यथान्यायं कार्यं चापि सुखप्रदम् ।
विशापकरणं चापि पप्रच्छतुरुभौ यमम् ॥ ३२ ॥
स ताभ्यां सहितः सौरिः पित्रे सूर्याय चाब्रवीत् ।
श्रुत्वा सूर्यः सुतं प्राह गङ्गायां सुरसत्तम ॥ ३३ ॥
लोकत्रयैकपावन्यां गौतम्यां दण्डके वने ।
श्रद्धया परया वत्स सुस्नातः सुसमाहितः ॥ ३४ ॥
ब्रह्माणं चैव विष्णुं च मामीशं च यथाक्रमम् ।
स्तुहि त्वं सर्वभावेन भृत्यौ प्रीतिमवाप्स्यतः ॥ ३५ ॥
तत्पितुर्वचनं श्रुत्वा यमः प्रीतमनास्तदा ।
तयोश्च प्रीतये प्रायाद्देवतर्पणयोर्यमः ॥ ३६ ॥
गौतम्यामघहारिण्यां सुसमाहितमानसः ।
तथैव तोषयामास गङ्गायां सुरसत्तमान् ॥ ३७ ॥
श्वभ्यां च सहितः श्रीमान्दक्षिणाशापतिः प्रभुः ।
ब्रह्माणं तोषयामास भानुं वै दक्षिणे तटे ॥ ३८ ॥
ईशानमुत्तरे विष्णुं स्वयं धर्मः प्रतापवान् ।
दत्तवन्तो वरं श्रेष्ठं सरमाया विशापकम् ॥
वरानयाचत बहूँल्लोकानामुपकारकान् ॥ ३९ ॥

यम उवाच ।

एषु स्नानं तु ये कुर्युर्ब्रह्मविष्णुमहेश्वराः ।
आत्मार्थं च परार्थं च ते कामानाप्नुयुः शुभान् ॥ ४० ॥
बाणतीर्थे तु ये स्नात्वा शार्ङ्गपाणिं स्मरन्ति वै ।
तेभ्यो दारिद्र्यदुःखानि न भवेयुर्युगे युगे ॥ ४१ ॥

गोतीर्थे ब्रह्मतीर्थे वा यस्तु स्नात्वा यतव्रतः ।
ब्रह्माणं तं नमस्याथ द्वीपस्यापि प्रदक्षिणम् ॥ ४२ ॥
यः कुर्यात्तेन पृथिवी सप्तद्वीपा वसुंधरा ।
प्रदक्षिणीकृता तत्र किंचिद्दत्वा वसु द्विजम् ॥ ४३ ॥
तद् वयजनं प्राप्य किंचिद्धुत्वा हुताशने ।
अश्वमेधादियज्ञानां फलं प्राप्नोति पुष्कलम्॥ ४४ ॥
यः सकृत्तत्र पठति गायत्रीं वेदमातरम् ।
अधीतास्तेन वेदा वै निष्कामो मुक्तिभाजनम् ॥ ४५ ॥
स्नात्वा तु दक्षिणे कूले शक्तिं देवीं तु भक्तितः ।
पूजयित्वा यथान्यायं सर्वान्कामानवाप्नुयात् ॥ ४६ ॥
ब्रह्मविष्णुमहेशानां शक्तिर्माता त्रयीमयी ।
सर्वान्कामानवाप्नोति(स्नात्वाऽत्र-
पूजयेद्यस्तां) पुत्रवान्धनवान्भवेत् ॥ ४७ ॥
आदित्यं भक्तितो यस्तु दक्षिणे नियतो नरः ।
स्नात्वा पश्येत तेनेष्टा यज्ञा विविधदक्षिणाः ॥ ४८ ॥
कूले यश्चोत्तरे चैव गङ्गाया दैत्यसूदनम् ।
स्नात्वा पश्येत तं नत्वा तस्य विष्णोः परं पदम् ॥ ४९ ॥
यमेश्वरं ततो यस्तु यमतीर्थे तु पूजितम् ।
स्नातः पश्यति युक्तात्मा स करोत्यचिरेण हि ॥ ५० ॥
पितॄणामक्षयं पुण्यं फलदं कीर्तिवर्धनम् ।
तत्र स्नानेन दानेन जपेन स्तवनेन च ॥
अपि दुष्कृतकर्माणः पितरो मोक्षमाप्नुयुः ॥ ५१ ॥

ब्रह्मोवाच ।

इत्याद्यष्ट सहस्राणि तीर्थानि त्रीणि नारद ।
तेषु स्नानं च दानं च सर्वमक्षयपुण्यदम् ॥ ५२ ॥
एतेषां स्मरणं पुण्यं नानाजन्माघनाशनम् ।
श्रवणात्पितृभिः सार्धं पठनात्स्वकुलैः सह ॥ ५३ ॥
तेषामप्यतिपापानि नाशं यान्ति ममाऽऽज्ञया ।
तत्र स्नानादि यः कृत्वा किंचिद्दत्त्वा यतात्मवान् ॥ ५४ ॥
पितृणां पिण्डदानादि कृत्वा नत्वा सुरानिमान् ।
धनं धान्यं यशो वीर्यमायुरारोग्यसंपदः ॥ ५५ ॥
पुत्रान्पौत्रान्प्रियां भार्यां लब्ध्वा चान्यन्मनीषितम् ।
अवियुक्तः प्रीतमना बन्धुभिश्चातिमानितः ॥ ५६ ॥
नरकस्थानपि पितॄंस्तारयित्वा कुलानि च ।
पावयित्वा प्रियैर्युक्तो ह्यन्ते विष्णुं शिवं स्मरेत् ॥
ततो मुक्तिपदं गच्छेद्देवानां वचनं यथा ॥ ५७ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये बाणतीर्थशार्ङ्गपाणीयगोद्वीपदेवयजनब्रह्मतीर्थशक्तियमादित्यसुपर्णदैत्यसूदनयमेश्वरपितृतीर्थादित्र्यधिकाष्टसहस्रतीर्थवर्णनं नामैकत्रिंशदधिकशततमोऽध्यायः ॥ १३१
गौतमीमाहात्म्ये द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

# अथ द्वात्रिंशदधिकशततमोऽध्यायः ।

## यक्षिणीसंगममाहात्म्यकथनम्

ब्रह्मोवाच ।

यक्षिणीसंगमं नाम तीर्थं सर्वफलप्रदम् ।
तत्र स्नानेन दानेन सर्वान्कामानवाप्नुयात् ॥ १ ॥
यत्र यक्षेश्वरो देवो दर्शनाद्भुक्तिमुक्तिदः ।
तत्र च स्नानमात्रेण सत्रयागफलं लभेत् ॥ २ ॥
विश्वावसोः स्वसा नाम्ना पिप्पला गुरुहासिनी ।
ऋषीणां सत्रमगमद्गौतमीतीरवर्तिनाम् ॥ ३ ॥
दृष्ट्वा तत्र ऋषीन्क्षामान्सा जहासातिगर्विता ।
या गत्वाऽऽश्रावय वौषडस्तु श्रौषदिति स्थिरम् ॥ ४ ॥
विस्वरेण ब्रुवती तां ते शेपुः स्राविणी भव ।
ततो नद्यभवत्तत्र यक्षिणीति सुविश्रुता ॥ ५ ॥
ततो विश्वावसुः पूज्य ऋषीन्देवं त्रिलोचनम् ।
संगम्य चैव गौतम्या तां विशापामथाकरोत् ॥ ६ ॥
ततः प्रभृति तत्तीर्थं यक्षिणीसंगमं स्मृतम् ।
तत्र स्नानादिदानेन सर्वान्कामानवाप्नुयात् ॥ ७ ॥
विश्वावसोः प्रसन्नोऽभूद्यत्र शंभुः शिवान्वितः ।
शैवं तत्परमं तीर्थं दुर्गातीर्थं च विश्रुतम् ॥ ८ ॥
सर्वपापौघहरणं सर्वदुर्गतिनाशनम् ।
सर्वेषां तीर्थमुख्यानां तद्धि सारं महामुने ॥
तीर्थं मुनिवरैः ख्यातं सर्वसिद्धिप्रदं नृणाम् ॥ ९ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये यक्षिणीसंगमदुर्गादि-
तीर्थवर्णनं नाम द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
गौतमीमाहात्म्ये त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

## अथ त्रयस्त्रिंशदधिकशततमोऽध्यायः ।

### शुक्लतीर्थवर्णनम्

ब्रह्मोवाच ।

शुक्लतीर्थमिति ख्यातं सर्वसिद्धिकरं नृणाम् ।
यस्य स्मरणमात्रेण सर्वकामानवाप्नुयात् ॥ १ ॥
भरद्वाज इति ख्यातो मुनिः परमधार्मिकः ।
तस्य पैठीनसी नाम भार्या सुकुलभूषणा ॥ २ ॥
गौतमीतीरमध्यास्ते पतिव्रतपरायणा ।
अग्नीषोमीयमैन्द्राग्नं पुरोडाशमकल्पयत् ॥ ३ ॥
पुरोडाशे श्रप्यमाणे धूमात्कश्चिदजायत ।
पुरोडाशं भक्षयित्वा लोकत्रितयभीषणः ॥ ४ ॥
यज्ञं मे ह्यत्र को हंसि कोपात्त्वमिति तं मुनिः ।
प्रोवाच सत्वरं क्रुद्धो भरद्वाजो द्विजोत्तमः ॥ ५ ॥
तद्रूपेर्वचनं श्रुत्वा राक्षसः प्रत्युवाच तम् ॥

राक्षस उवाच ।

हव्यघ्न इति विख्यातं भरद्वाज निबोध माम् ।
संध्यासुतोऽहं ज्येष्ठश्च पुनः प्राचीनबर्हिषः ॥ ६ ॥

ब्रह्मणा मे वरो दत्तो यज्ञान्खाद यथासुखम् ।
ममानुजः कलिश्चापि बलवानतिभीषणः ॥ ७ ॥
अहं कृष्णः पिता कृष्णो माता कृष्णा तथाऽनुजः ।
अहं मखं हनिष्यामि यूपं छेद्मि कृतान्तकः ॥ ८ ॥

भरद्वाज उवाच ।

रक्ष्यतां मे त्वया यज्ञं प्रियो धर्मः सनातनः ।
जाने त्वां यज्ञहन्तारं सद्द्विजं रक्ष मे क्रतुम् ॥ ६ ॥

यज्ञघ्न उवाच ।

भरद्वाज निबोधेदं वाक्यं मम समासतः ।
ब्रह्मणाऽहं पुरा शप्तो देवदानवसंनिधौ ॥ १० ॥
ततः प्रसादितो देवो मया लोकपितामहः ।
अमृतैः प्रोक्षयिष्यन्ति यदा त्वां मुनिसत्तमाः ॥ ११ ॥
तदा विशापो भविता हव्यघ्न त्वं न चान्यथा ।
एवं करिष्यसि यदा ततः सर्वं भविष्यति ॥
यद्यदाकाङ्क्षितं ब्रह्मन्नैतन्मिथ्या कदाचन ॥ १२ ॥

ब्रह्मोवाच ।

भरद्वाजः पुनः प्राह सखा मेऽसि महामते ।
मखसंरक्षणं येन स्यान्मे वद करोमि तत् ॥ १३ ॥
संभूय देवा दैतेया ममन्थुः क्षीरसागरम् ।
अलभन्तामृतं कष्टात्तदस्मत्सुलभं कथम् ॥ १४ ॥
प्रीत्या यदि प्रसन्नोऽसि सुलभं यद्वदस्व तत् ।
तदृषेर्वचनं श्रुत्वा रक्षः प्राह तदा मुदा ॥ १५ ॥

५४—

रक्ष उवाच ।

अमृतं गौतमीवारि अमृतं स्वर्णमुच्यते ।
अमृतं गोभवं चाऽऽज्यममृतं सोम एव च ॥ १६ ॥
एतैर्मामभिषिञ्चस्व अथ वैतैस्तथा त्रिभिः ।
गङ्गाया वारिणाऽऽज्येन हिरण्येन तथैव च ॥
सर्वेभ्योऽप्यधिकं दिव्यममृतं गौतमीजलम् ॥ १७ ॥

ब्रह्मोवाच ।

एतदाकर्ण्य स ऋषिः परं संतोषमागतः ।
पाणावादाय गङ्गायाः सलिलामृतमादरात् ॥ १८ ॥
तेनाकरोदृषी रक्षो ह्यभिषिक्तं तदा मखे ।
पुनश्च यूपे च पशावृत्विक्षु मखमण्डले ॥ १९ ॥
सर्वमेवाभवच्छुक्लमभिषेकान्महात्मनः ।
तद्रक्षोऽपि तदा शुक्लो भूत्वोत्पन्नो महाबलः ॥ २० ॥
यः पुरा कृष्णरूपोऽभूत्स तु शुक्लोऽभवत्क्षणात् ।
यज्ञं सर्वं समाप्याथ भरद्वाजः प्रतापवान् ॥ २१ ॥
ऋत्विजोऽपि विसृज्याथ यूपं गङ्गोदकेऽक्षिपत् ।
गङ्गामध्ये तद्धि यूपमद्याप्यास्ते महामते ॥ २२ ॥
अभिषिक्तं चामृतेन अभिज्ञानं तु तन्महत् ।
तत्र तीर्थे पुना रक्षो भरद्वाजमुवाच ह ॥ २३ ॥

रक्ष उवाच ।

अहं यामि भरद्वाज कृतः शुक्लस्त्वया पुनः ।
तस्मात्तवात्र तीर्थे ये स्नानदानादिपूजनम् ॥ २४ ॥

कुर्युस्तेषामभीष्टानि भवेयुर्यत्फलं मखे।
स्मरणादपि पापानि नाशं यान्तु सदा मुने ॥ २५ ॥
ततः प्रभृति तत्तीर्थं शुक्रतीर्थमिति स्मृतम्।
गौतम्यां दण्डकारण्ये स्वर्गद्वारमपावृतम् ॥ २६ ॥
उभयोस्तीरयाः सप्त सहस्राण्यपराणि च।
तीर्थानां मुनिशार्दूल सर्वसिद्धिप्रदायिनाम् ॥ २७ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये शुक्रतीर्थाद्युभय-
तीरस्थसप्तसहस्रतीर्थवर्णनं नाम त्रयस्त्रिंशदधिक-
शततमोऽध्यायः ॥ १३३ ॥
गौतमीमाहात्म्ये चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

# अथ चतुस्त्रिंशदधिकशततमोऽध्यायः।

## चक्रतीर्थवर्णनम्

ब्रह्मोवाच।

चक्रतीर्थमिति ख्यातं स्मरणात्पापनाशनम्।
तस्य प्रभावं वक्ष्यामि शृणु यत्नेन नारद ॥ १ ॥
ऋषयः सप्त विख्याता वसिष्ठप्रमुखा मुने।
गौतम्यास्तीरमाश्रित्य सत्त्रयज्ञमुपासते ॥ २ ॥
तत्र विघ्न उपक्रान्ते रक्षोभिरतिभीषणे।
मामभ्येत्याथ मुनयो रक्षःकृत्यं न्यवेदयन् ॥ ३ ॥

तदाऽहं प्रमदारूपं माययाऽऽसृज्य नारद ।
यस्याश्च दर्शनादेव नाशं यान्त्यथ राक्षसाः ॥ ४ ॥
एवमुक्त्वा तु तां प्रादामृषिभ्यः प्रमदां मुने ।
मद्वाक्यादृषयो मायामादाय पुनरागमन् ॥ ५ ॥
अजैका या समाख्याता कृष्णलोहितरूपिणी ।
मुक्तकेशीत्यभिधया साऽऽस्तेऽद्यापि स्वरूपिणी ॥ ६ ॥
लोकत्रितयसंमोहदायिनी कामरूपिणी ।
तद्बलात्स्वस्थमनसः सर्वे च मुनिपुंगवाः ॥ ७ ॥
गौतमीं सरितां श्रेष्ठां पुनर्यज्ञाय दीक्षिताः ।
पुनस्तन्मखनाशाय राक्षसाः समुपागमन् ॥ ८ ॥
यज्ञवाटान्तिके मायां दृष्ट्वा राक्षसपंगवाः ।
ततो नृत्यन्ति गायन्ति हसन्ति च रुदन्ति च ॥ ९ ॥
माहेश्वरी महामाया प्रभावेणातिदर्पिता ।
तेषां मध्ये दैत्यपतिः शम्बरो नाम वीर्यवान् ॥ १० ॥
मायारूपां तु प्रमदां भक्षयामास नारद ।
तदद्भुतमतीवाऽऽसीत्तन्मायाबलदर्शिनाम् ॥ ११ ॥
मखे विध्वंस्यमाने तु ते विष्णुं शरणं ययुः ।
प्रादाद्विष्णुश्चक्रमथो मुनीनां रक्षणाय तु ॥ १२ ॥
चक्रं तद्राक्षसानाजौ दैत्यांश्च दनुजांस्तथा ।
चिच्छेद तद्भयादेव मृता राक्षसपुंगवाः ॥ १३ ॥
ऋषिभिस्तन्महासत्रं संपूर्णमभवत्तदा ।
विष्णोः प्रक्षालितं चक्रं गङ्गाम्भोभिः सुदर्शनम् ॥ १४ ॥

ततः प्रभृति तत्तीर्थं चक्रतीर्थमुदाहृतम् ।
तत्र स्नानेन दानेन सत्रयागफलं लभेत् ॥ १५ ॥
तत्र पञ्च शतान्यासंस्तीर्थानां पापहारिणाम् ।
तेषु स्नानं तथा दानं प्रत्येकं मुक्तिदायकम् ॥ १६ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये चक्रतीर्थादिपञ्चशततीर्थवर्णनं नाम चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥
गौतमीमाहात्म्ये पञ्चषष्टितमोऽध्यायः ॥ ५५ ॥

---

## अथ पञ्चत्रिंशदधिकशततमोऽध्यायः ।

### वाणीसंगमतीर्थवर्णनम्

ब्रह्मोवाच ।

वाणीसंगममाख्यातं यत्र वागीश्वरो हरः ।
तत्तीर्थं सर्वपापानां मोचनं सर्वकामदम् ॥ १ ॥
तत्र स्नानेन दानेन ब्रह्महत्यादिनाशनम् ।
ब्रह्मविष्णवोश्च संवादे महत्त्वे च परस्परम् ॥ २ ॥
तयोर्मध्ये महादेवो ज्योतिर्मूर्तिरभूत्किल ।
तत्रैव वागुवाचेदं दैवी पुत्र तयोः शुभा ॥ ३ ॥
अहमस्मि महांस्तत्र अहमस्मीति वै मिथः ।
दैवी वाक्तावुभौ प्राह यस्त्वस्यान्तं तु पश्यति ॥ ४ ॥
स तु ज्येष्ठो भवेत्तस्मान्मा वादं कर्तुमर्हथः ।
तद्वाक्याद्विष्णुरगमदधोऽहं चोर्ध्वमेव च ॥ ५ ॥

ततो विष्णुः शीघ्रमेत्य ज्योतिःपार्श्वं उपाविशत् ।
अप्राप्यान्तमहं प्रायां दूराद्दूरतरं मुने ॥ ६ ॥
ततः श्रान्तो निवृत्तोऽहं द्रष्टमीशं तु तं प्रभुम् ।
तदैवं मम धीरासीद्दृष्टश्चान्तो मया भृशम् ॥ ७ ॥
अस्य देवस्य तद्विष्णोर्मम ज्यैष्ठ्यं स्फुटं भवेत् ।
पुनश्चापि मम त्वेवं मतिरासीन्महामते ॥ ८ ॥
सत्यैर्वक्त्रैः कथं वक्ष्ये पीडितोऽप्यनृतं वचः ।
नानाविधेषु पापेषु नानृतात्पातकं परम् ॥ ९ ॥
सत्यैर्वक्त्रैरसत्यां वा वाचं वक्ष्ये कथं त्विति ।
ततोऽहं पञ्चमं वक्त्रं गर्दभाकृतिभीषणम् ॥ १० ॥
कृत्वा तेनानृतं वक्ष्य इति ध्यात्वा चिरं तदा ।
अब्रवं तं हरिं तत्र आसीनं जगतां प्रभुम् ॥ ११ ॥
अस्य चान्तो मया दृष्टस्तेन ज्यैष्ठ्यं जनार्दन ।
ममेति वदतः पार्श्वे उभौ तौ हरिशंकरौ ॥ १२ ॥
एकरूपत्वमापन्नौ सूर्याचन्द्रमसाविव ।
तौ दृष्ट्वा विस्मितो भीतश्चास्तवं तावुभावपि ॥
ततः क्रुद्धौ जगन्नाथौ वाचं तामिदमूचतुः ॥ १३ ॥

हरिहरावूचतुः ।

दुष्टे त्वं निम्नगा भूया नानृतादस्ति पातकम् ॥ १४ ॥

ब्रह्मोवाच ।

ततः सा विह्वला भूत्वा नदीभावमुपागता ।
तद्दृष्ट्वा विस्मितो भीतस्तामब्रवमहं तदा ॥ १५ ॥

यस्मादसत्यमुक्ताऽसि ब्रह्मवाचि स्थिता सती।
तस्माददृश्या त्वं भूयाः पापरूपाऽस्यसंशयम् ॥ १६ ॥
एतच्छापं विदित्वा तु तौ देवौ प्रणता तदा ।
विशापत्वं प्रार्थयन्ती तुष्टाव च पुनः पुनः ॥ १७ ॥
ततस्तुष्टौ देवदेवौ प्रार्थितौ त्रिदशार्चितौ ।
प्रीत्या हरिहरावेवं वाचं वाचमथोचतुः ॥ १८ ॥

हरिहरावूचतुः ।

गङ्गया संगता भद्रे यदा त्वं लोकपावनी ।
तदा पुनर्वपुस्ते स्यात्पवित्रं हि सुशोभने ॥ १९ ॥

ब्रह्मोवाच ।

तथेत्युक्त्वा साऽपि देवी गङ्गया संगताऽभवत् ।
भागीरथी गौतमी च ततश्चापि स्वकं वपुः ॥ २० ॥
देवी सा व्यगमद्ब्रह्मन्देवानामपि दुर्लभम् ।
गौतम्यां सैव विख्याता नाम्ना वाणीति पुण्यदा ॥ २१ ॥
भागीरथ्यां सैव देवी सरस्वत्यभिधीयते ।
उभयत्रापि विख्यातः संगमो लोकपूजितः ॥ २२ ॥
सरस्वतीसंगमश्च वाणीसंगम एव च ।
गौतम्या संगता देवी वाणी वाचा सरस्वती ॥ २३ ॥
सर्वत्र पूजितं तीर्थं तत्र वाचा शिवं प्रभुम् ।
देवेश्वरं पूजयित्वा विशापमगमद्यतः ॥ २४ ॥

ब्रह्मा विधूय वाग्दौष्ट्यं स्वं च धामागमत्पुनः ।
तस्मात्तत्र शुचिर्भूत्वा स्नात्वा तत्र च संगमे ॥ २५ ॥
वागीश्वरं ततो दृष्ट्वा तावता मुक्तिमाप्नुयात् ।
दानहोमादिकं किंचिदुपवासादिकां क्रियाम् ॥ २६ ॥
यः कुर्यात्संगमे पुण्ये संसारे न भवेत्पुनः ।
एकोनविंशतिशतं तीर्थानां तीरयोर्द्वयोः ॥
नानाजन्मार्जिताशेषपापक्षयविधायिनाम् ॥ २७ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये वाणीसंगमवागीश्वराद्युभयतटस्थैकोनविंशतिशततीर्थवर्णनं नाम पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥
गौतमीमाहात्म्ये षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

## अथ षट्त्रिंशदधिकशततमोऽध्यायः ।

### विष्णुतीर्थवर्णनम्

ब्रह्मोवाच ।

विष्णुतीर्थमिति ख्यातं तत्र वृत्तमिदं शृणु ।
मौद्गल्य इति विख्यातो मुद्गलस्य सुतो ऋषिः ॥ १ ॥
तस्य भार्या तु जाबाला नाम्ना ख्याता सुपुत्रिणी ।
पिता ऋषिस्तथा वृद्धो मुद्गलो लोकविश्रुतः ॥ २ ॥

तस्य भार्या तथा ख्याता नाम्ना भागीरथी शुभा ।
स मौद्गल्यः प्रातरेव गङ्गां स्नाति यतव्रतः ॥ ३ ॥
नित्यमेव त्विदं कर्म तस्याऽऽसीन्मुनिसत्तम ।
गङ्गातीरे कुशैर्मृद्भिः शमीपुष्पैरहर्निशम् ॥ ४ ॥
गुरूदितेन मार्गेण स्वमानससरोरुहे ।
आवाहनं नित्यमेव विष्णोश्चक्रे स मौद्गलिः ॥ ५ ॥
तेनाऽऽहूतस्त्वरन्नेति लक्ष्मीभर्ता जगत्पतिः ।
वैनतेयमथाऽऽरुह्य शङ्खचक्रगदाधरः ॥ ६ ॥
पूजितस्तेन ऋषिणा स मौद्गल्येन यत्नतः ।
प्रब्रूते च कथाश्चित्रा मौद्गल्याय जगत्प्रभुः ॥ ७ ॥
ततोऽपराह्णसमये विष्णुः प्राह स मौद्गलिम् ।
याहि वत्स स्वभवनं श्रान्तोऽसीति पुनः पुनः ॥ ८ ॥
एवमुक्तः स देवेन विष्णुना याति स द्विजः ।
जगत्प्रभुस्ततो याति देवैर्युक्तः स्वमन्दिरम् ॥ ९ ॥
मौद्गल्योऽपि तथाऽभ्येत्य किंचिदादाय नित्यशः ।
स्वमेव भवनं विद्वान्भार्यायै स्वार्जितं धनम् ॥ १० ॥
ददाति स महाविष्णुचरणाब्जपरायणः ।
मौद्गल्यस्य प्रिया साऽपि पतिव्रतपरायणा ॥ ११ ॥
शाकं मूलं फलं वाऽपि भर्त्राऽऽनीतं तु यत्नतः ।
सुसंस्कृत्याप्यतिथीनां बालानां भर्तुरेव च ॥ १२ ॥
दत्त्वा तु भोजनं तेभ्यः पश्चाद्भुङ्क्ते यतव्रता ।
भुक्तवत्स्वथ सर्वेषु रात्रौ नित्यं स मौद्गलिः ॥ १३ ॥

विष्णोः श्रुताः कथाश्चित्रास्तेभ्यो वक्त्यथ हर्षितः ।
एवं बहुतिथे काले व्यतीते चातिविस्मिता ॥
मौद्गल्यस्य रहो भार्या भर्तारं वाक्यमब्रवीत् ॥ १४ ॥

जाबालोवाच ।

यदि ते विष्णुरभ्येति समीपं त्रिदशार्चितः ।
तथाऽपि कष्टमस्माकं कस्मादिति जगत्प्रभुम् ॥ १५ ॥
तत्पृच्छ त्वं महाप्राज्ञ यदाऽसौ विष्णुरेति च ।
यस्मिंश्च स्मृतमात्रे तु जराजन्मरुजो मृतिः ॥
नाशं यान्ति कुतो दृष्टे तस्मात्पृच्छ जगत्पतिम् ॥ १६ ॥

ब्रह्मोवाच ।

तथेत्युक्त्वा प्रियावाक्यान्मौद्गल्यो नित्यवद्धरिम् ।
पूजयित्वा विनीतश्च पप्रच्छ स कृताञ्जलिः ॥ १७ ॥

मौद्गल्य उवाच ।

त्वयि स्मृते जगन्नाथ शोकदारिद्र्यदुष्कृतम् ।
नाशं याति विपत्तिर्मे त्वयि दृष्टे कथं स्थिता ॥ १८ ॥

श्रीविष्णुरुवाच ।

स्वकृतं भुज्यते भूतैः सर्वैः सर्वत्र सर्वदा ।
न कोऽपि कस्यचित्किंचित्करोत्यत्र हिताहिते ॥ १९ ॥
यादृशं चोप्यते बीजं फलं भवति तादृशम् ।
रसालः स्यान्न निम्बस्य बीजाज्जात्वपि कुत्रचित् ॥ २० ॥
न कृता गौतमीसेवा नार्चितौ हरिशंकरौ ।
न दत्तं यैश्च विप्रेभ्यस्ते कथं भाजनं श्रियः ॥ २१ ॥

त्वया न दत्तं किंचिच्च ब्राह्मणेभ्यो ममापि च।
यद्दीयते तद्देवेह परस्मिंश्चोपतिष्ठति ॥ २२ ॥
मृद्भिर्वार्भिः कुशैर्मन्त्रैः शुचिकर्म सदैव यत्।
करोति तस्मात्पूतात्मा शरीरस्य च शोषणात् ॥ २३ ॥
विना दानेन च क्वापि भोगावाप्तिर्नृणां भवेत्।
सत्कर्माचरणाच्छुद्धो विरक्तः स्यात्ततो नरः ॥ २४ ॥
ततोऽप्रतिहतज्ञानो जीवन्मुक्तस्ततो भवेत्।
सर्वेषां सुलभा मुक्तिर्मद्भक्त्या चेह पूर्ततः ॥ २५ ॥
भुक्तिर्दानादिना सर्वभूतदुःखनिबर्हणात्।
अथवा लप्स्यसे मुक्तिं भक्त्या भुक्तिं न लप्स्यसे ॥ २६ ॥

मौद्गल्य उवाच।

भक्त्या मुक्तिः कथं भूयाद्भुक्तेर्मुक्तिः सुदुर्लभा।
जाता चेद्देहिनां मुक्तिः किमन्येन प्रयोजनम् ॥ २७ ॥
भक्त्या मुक्तिः सर्वपूज्या तामिच्छेयं जगन्मय ॥ २८ ॥

विष्णुरुवाच।

एतदेवान्तरं ब्रह्मन्दीयते मामनुस्मरन्।
ब्राह्मणायाथवाऽर्थिभ्यस्तदेवाक्षयतां व्रजेत् ॥ २९ ॥
मामध्यात्वाऽथ यद्दद्यात्तत्तन्मात्रफलप्रदम्।
तत्पुनर्दत्तमेवेह न भोगायात्र कल्पते ॥ ३० ॥
तस्माद्देहि महाबुद्धे भोज्यं किंचिन्मम ध्रुवम्।
अथवा विप्रमुख्याय गौतमीतीरमाश्रितः ॥ ३१ ॥

ब्रह्मोवाच ।

मौद्गल्यः प्राह तं विष्णुं देयं मम न विद्यते ।
नान्यत्किंचन देहादि यत्त्वयि समर्पितम् ॥ ३२ ॥
ततो विष्णुर्गरुत्मन्तं प्राह शीघ्रं जगत्पतिः ।
इहाऽऽनयस्व कणिशं ममायं चार्पयिष्यति ॥ ३३ ॥
ततो योग्यानयं भोगान्प्राप्स्यते मनसः प्रियान् ।
आकर्ण्य स्वामिनाऽऽदिष्टं तथा चक्रे स पक्षिराट् ॥ ३४ ॥
विष्णुहस्ते कणान्प्रादात्स मौद्गल्यो यतव्रतः ।
एतस्मिन्नन्तरे विष्णुर्विश्वकर्माणमब्रवीत् ॥ ३५ ॥

विष्णुरुवाच ।

यावच्चास्य कुले सप्त पुरुषास्तावदेव तु ।
भवितारो महाबुद्धे तावत्कामा मनीषिताः ॥
गावो हिरण्यं धान्यानि वस्त्राण्याभरणानि च ॥ ३६ ॥

ब्रह्मोवाच ।

यच्च किंचिन्मनःप्रीत्यै लोके भवति भूषणम् ।
तत्सर्वमाप मौद्गल्यो विष्णुगङ्गाप्रभावतः ॥ ३७ ॥
गृहं गच्छेति मौद्गल्यो विष्णुनोक्तस्ततो ययौ ।
आश्रमे स्वस्य सर्वर्धि दृष्ट्वा ऋषिरभाषत ॥ ३८ ॥

ऋषिरुवाच ।

अहो दानप्रभावोऽयमहो विष्णोरनुस्मृतिः ।
अहो गङ्गाप्रभावश्च कैर्विचार्यो महानयम् ॥ ३९ ॥

ब्रह्मोवाच।

मौद्गल्यो भार्यया सार्धं पुत्रैः पौत्रैश्च बन्धुभिः।
पितृभ्यां बुभुजे भोगान्भुक्तिं मुक्तिमवाप च ॥ ४० ॥
ततः प्रभृति तत्तीर्थं मौद्गल्यं वैष्णवं तथा।
तत्र स्नानं च दानं च भुक्तिमुक्तिफलप्रदम् ॥ ४१ ॥
तत्र श्रुतिः स्मृतिर्वाऽपि तीर्थस्य स्यात्कथंचन।
तस्य विष्णुर्भवेत्प्रीतः पापैर्मुक्तः सुखी भवेत् ॥ ४२ ॥
एकादश सहस्राणि तीर्थानां तीरयोर्द्वयोः।
सर्वार्थदायिनां तत्र स्नानदानजपादिभिः ॥ ४३ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये मौद्गल्यविष्णुतीर्थाद्येकादशसहस्रतीर्थवर्णनं नाम षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥
गौतमीमाहात्म्ये सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अथ सप्तत्रिंशदधिकशततमोऽध्यायः।

### लक्ष्मीतीर्थवर्णनम्

ब्रह्मोवाच।

लक्ष्मीतीर्थमिति ख्यातं साक्षाल्लक्ष्मीविवर्धनम्।
अलक्ष्मीनाशनं पुण्यमाख्यानं शृणु नारद ॥ १ ॥
संवादश्च पुरा त्वासील्लक्ष्म्याः पुत्र दरिद्रया।
परस्परविरोधिन्यावुभे विश्वं समीयतुः ॥ २ ॥

ताभ्यामव्याप्तं वस्तु तन्नास्ति भुवनत्रये।
मम ज्यैष्ठ्यं मम ज्यैष्ठ्यमित्यूचतुरुभे मिथः॥
अहं पूर्वं समुद्भूता इत्याह श्रियमोजसा॥ ३॥

श्रीलक्ष्मीरुवाच।

कुलं शीलं जीवितं वा देहिनामहमेव तु।
मया विना देहभाजो जीवन्तोऽपि मृता इव॥ ४॥

ब्रह्मोवाच।

दरिद्र्या च सा प्रोक्ता सर्वेभ्यो ह्यधिका ह्यहम्।
मुक्तिर्मदाश्रिता नित्यं दरिद्रैवं वचोऽब्रवीत्॥ ५॥
कामः क्रोधश्च लोभश्च मदो मात्सर्यमेव च।
यत्राहमस्मि तत्रैते न तिष्ठन्ति कदाचन॥ ६॥
न भयोद्भूतिरुन्माद ईर्ष्या उद्धतवृत्तिता।
यत्राहमस्मि तत्रैते न तिष्ठन्ति कदाचन॥ ७॥
दरिद्राया वचः श्रुत्वा लक्ष्मीस्तां प्रत्यभाषत॥ ८॥

लक्ष्मीरुवाच।

अलंकृतो मया जन्तुः सर्वो भवति पूजितः।
निर्धनः शिवतुल्योऽपि सर्वैरप्यभिभूयते॥ ९॥
देहीति वचनद्वारा देहस्थाः पञ्च देवताः।
सद्यो निर्गत्य गच्छन्ति धीश्रीह्रीशान्तिकीर्तयः॥ १०॥
तावद्गुणा गुरुत्वं च यावन्नार्थयते परम्।
अर्थी चेत्पुरुषो जातः क्व गुणाः क्व च गौरवम्॥ ११॥

तावत्सर्वोत्तमो जन्तुस्तावत्सर्वगुणालयः ।
नमस्यः सर्वलोकानां यावन्नार्थयते परम् ॥ १२ ॥
कष्टमेतन्महापापं निर्धनत्वं शरीरिणाम् ।
न मानयति नो वक्ति न स्पृशत्यधनं जनः ॥ १३ ॥
अहमेव ततः श्रेष्ठा दरिद्रे शृणु मे वचः ॥ १४ ॥

ब्रह्मोवाच ।

तल्लक्ष्मीवचनं श्रुत्वा दरिद्रा वाक्यमब्रवीत् ॥ १५ ॥

दरिद्रोवाच ।

वक्तुं न लक्ष्मीर्ज्येष्ठाऽहमिति वै लज्जसे मुहुः ।
पापेषु रमसे नित्यं विहाय पुरुषोत्तमम् ॥ १६ ॥
विश्वस्तवञ्चका नित्यं भवती श्लाघसे कथम् ।
सुखं न तादृक्त्वत्प्राप्तौ पश्चात्तापो यथा गुरुः ॥ १७ ॥
न तथा जायते पुंसां सुरया दारुणो मदः ।
त्वत्संनिधानमात्रेण यथा व विदुषामपि ॥ १८ ॥
सदैव रमसे लक्ष्मीः प्रायस्त्वं पापकारिषु ।
अहं वसामि योग्येषु धर्मशीलेषु सर्वदा ॥ १९ ॥
शिवविष्णवनुरक्तेषु कृतज्ञेषु महत्सु च ।
सदाचारेषु शान्तेषु गुरुसेवोद्यतेषु च ॥ २० ॥
सत्सु विद्वत्सु शूरेषु कृतबुद्धिषु साधुषु ।
निवसामि सदा लक्ष्मीस्तस्माज्ज्यैष्ठ्यं मयि स्थितम् ॥ २१ ॥
ब्राह्मणेषु शुचिष्मत्सु व्रतचारिषु भिक्षुषु ।
निर्भयेषु वसिष्यामि लक्ष्मीस्त्वं शृणु ते स्थितिम् ॥ २२ ॥

राजवर्तिषु पापेषु निष्ठुरेषु खलेषु च।
पिशुनेषु च लुब्धेषु विकृतेषु शठेषु च ॥ २३ ॥
अनार्येषु कृतघ्नेषु धर्मघातिषु सर्वदा।
मित्रद्रोहिष्वलिष्टेषु भग्नचित्तेषु वर्तसे ॥ २४ ॥

ब्रह्मोवाच।

एवं विवदमाने ते जग्मतुर्मामुभे अपि।
तयोर्वाक्यमुपश्रुत्य मयोक्ते ते उभे अपि ॥ २५ ॥
मत्तः पूर्वतरा पृथ्वी आपः पूर्वतरास्ततः।
स्त्रीणां विवादं ता एव स्त्रियो जानन्ति नेतरे ॥ २६ ॥
विशेषतः पुनस्ताभ्यः कमण्डलुभवाश्च याः।
तत्रापि गौतमी देवी निश्चयं कथयिष्यति ॥ २७ ॥
सैव सर्वार्तिसंहर्त्री सैव संदेहकर्तरी।
ते मद्वाक्याद्भुवं गत्वा भूम्या च सहिते अपि ॥ २८ ॥
अद्भिश्च सहिताः सर्वा गौतमीं ययुरापगाम्।
भूमिरापस्तयोर्वाक्यं गौतम्यै क्रमशः स्फुटम् ॥ २९ ॥
सर्वं निवेदयामासुर्यथावृत्तं प्रणम्य ताम्।
दरिद्रायाश्च लक्ष्म्याश्च वाक्यं मध्यस्थवत्तदा ॥ ३० ॥
शृण्वत्सु लोकपालेषु शृण्वत्यां भुवि नारद।
शृण्वतीष्वप्सु सा गङ्गा दरिद्रां वाक्यमब्रवीत् ॥
संप्रशस्य तथा लक्ष्मीं गौतमी वाक्यमब्रवीत् ॥ ३१ ॥

गौतम्युवाच।

ब्रह्मश्रीश्च तपःश्रीश्च यज्ञश्रीः कीर्तिसंज्ञिता।
धनश्रीश्च यशःश्रीश्च विद्या प्रज्ञा सरस्वती ॥ ३२ ॥

भुक्तिश्रीश्चाथ मुक्तिश्च स्मृतिर्लज्जा धृतिः क्षमा।
सिद्धिस्तुष्टिस्तथा पुष्टिः शान्तिरापस्तथा मही ॥ ३३ ॥
अहंशक्तिरथौषध्यः श्रुतिः शुद्धिर्विभावरी।
द्यौर्ज्योत्स्ना आशिषः स्वस्तिर्व्याप्तिर्माया उषा शिवा ॥ ३४ ॥
यत्किंचिद्विद्यते लोके लक्ष्म्या व्याप्तं चराचरम्।
ब्राह्मणेष्वथ धीरेषु क्षमावत्स्वथ साधुषु ॥ ३५ ॥
विद्यायुक्तेषु चान्येषु भुक्तिमुक्त्यनुसारिषु।
यद्यद्रम्यं सुन्दरं वा तत्तल्लक्ष्मीविजृम्भितम् ॥ ३६ ।
किमत्र बहुनोक्तेन सर्वं लक्ष्मीमयं जगत्।
यस्मिन्कस्मिंश्च यत्किंचिदुत्कृष्टं परिदृश्यते ॥ ३७ ॥
लक्ष्मीमयं तु तत्सर्वं तया हीनं न किंचन।
अत्रेमां सुन्दरीं देवीं स्पर्धयन्ती न लज्जसे ॥ ३८ ॥
गच्छ गच्छेति तां गङ्गा दरिद्रां वाक्यमब्रवीत्।
ततः प्रभृति गङ्गाम्भो दरिद्रावैरकार्यभूत् ॥ ३९ ॥
तावद्दरिद्राभिभवो गङ्गा यावन्न सेव्यते।
ततः प्रभृति तत्तीर्थमलक्ष्मीनाशनं शुभम् ॥ ४० ॥
तत्र स्नानेन दानेन लक्ष्मीवान्पुण्यवान्भवेत्।
तीर्थानां षट्सहस्राणि तस्मिंतीर्थे महामते ॥
देवर्षिमुनिजुष्टानां सर्वसिद्धिप्रदायिनाम् ॥ ४१ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये लक्ष्मीतीर्थादिषट्-
सहस्रतीर्थवर्णनं नाम सप्तत्रिंशदधिकशत-
तमोऽध्यायः ॥ १३७ ॥
गौतमीमाहात्म्येऽष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

# अथाष्टात्रिंशदधिकशततमोऽध्यायः ।

## भान्वादित्रिसहस्रतीर्थवर्णनम्

ब्रह्मोवाच ।

भानुतीर्थमिति ख्यातं सर्वसिद्धिकरं नृणाम् ।
तत्रेदं वृत्तमाख्यास्ये महापातकनाशनम् ॥ १ ॥
शर्यातिरिति विख्यातो राजापरमधार्मिकः ।
तस्य भार्या स्थविष्ठेति रूपेणाप्रतिमा भुवि ॥ २ ॥
मधुच्छन्दा इति ख्यातो वैश्वमित्रो द्विजोत्तमः ।
पुरोधास्तस्य नृपतेर्ब्रह्मर्षिः शमिनां प्रभुः ॥ ३ ॥

दिशो विजेतुं स जगाम राजा,
पुरोधसा तेन नृपप्रवीरः ।
पुरोधसं प्राह महानुभावं,
जित्वा दिशश्चाध्वनि संनिविष्टः ॥ ४ ॥
पप्रच्छेदं केन खेदं गतोऽसि,
हेतुं वदस्वेति महानुभाव ।
त्वमेव राज्ये मम सर्वमान्यः,
समस्तविद्यानिरवद्यबोधः ॥ ५ ॥
विधूतपापः परितापशून्यः,
किमन्यचेता इव लक्ष्यसे त्वम् ।
जितेयमुर्वी विजिता नरेन्द्रा,
हर्षस्य हेतौ महतीह जाते ॥ ६ ॥

किं त्वं कृशो मे वद सत्यमेव,
द्विजातिवर्यातिमहानुभाव ।
संबोध्य शर्यातिमुवाच विप्र-
श्छन्दोमधुः प्रेममयीं प्रियोक्तिम् ॥ ७ ॥

मधुच्छन्दा उवाच ।

शृणु भूपाल मद्वाक्यं भार्यया यदुदीरितम् ।
स्थिते यामे वयं यामो यामिनी चार्धगामिनी ॥ ८ ॥
स्वामिनी चास्य देहस्य कामिनी मां प्रतीक्षते ।
स्मृत्वा तत्कामिनीवाक्यं शोषं याति कलेवरम् ॥
विकारे स्मरसंजाते जीवातुर्नलिनानना ॥ ९ ॥

ब्रह्मोवाच ।

विहस्य चाब्रवीद्राजा पुरोधसमरिंदमः ॥ १० ॥

राजोवाच ।

त्वं गुरुर्मम मित्रं च किमात्मानं विडम्बसे ।
किमनेन महाप्राज्ञ मम वाक्येन मानद ॥
क्षणविध्वंसिनि सुखे का नामाऽऽस्था महात्मनाम् ॥ ११ ॥

ब्रह्मोवाच ।

एतदाकर्ण्य मतिमान्मधुच्छन्दा वचोऽब्रवीत् ॥ १२ ॥

मधुच्छन्दा उवाच ।

यत्राऽऽनुकूल्यं दंपत्योस्त्रिवर्गस्तत्र वर्धते ।
न चेदं दूषणं राजन्भूषणं चातिमन्यताम् ॥ १३ ॥

ब्रह्मोवाच ।

आजगाम स्वकं देशं महत्या सेनया वृतः ।
परीक्षार्थं च तत्प्रेम पुर्यां वार्तामदीदिशत् ॥ १४ ॥
दिशो विजेतुं शर्यातौ याते राक्षसपुंगवः ।
हत्वा रसातलं यातो राजानं सपुरोधसम् ॥ १५ ॥
राज्ञा भार्या निश्चयाय प्रवृत्ता मुनिसत्तम ।
वार्तां श्रुत्वा दूतमुखान्मधुच्छन्दःप्रिया पुनः ॥ १६ ॥
तदैवाभूद्गतप्राणा तद्विचित्रमिवाभवत् ।
तस्या वृत्तं तु ते दृष्ट्वा दूता राज्ञे न्यवेदयन् ॥ १७ ॥
यत्कृतं राजपत्नीभिः प्रियया च पुरोधसः ।
विस्मितो दुःखितो राजा पुनर्दूतानभाषत ॥ १८ ॥

राजोवाच ।

शीघ्रं गच्छन्तु हे दूता ब्राह्मण्या यत्कलेवरम् ।
रक्षन्तु वार्तां कुरुत राजाऽऽगन्ता पुरोधसा ॥ १९ ॥

ब्रह्मोवाच ।

इति चिन्तातुरे राज्ञि वागुवाचाशरीरिणी ॥ २० ॥

आकाशवागुवाच ।

विधास्यत्यखिलं गङ्गा राजंस्तव समीहितम् ।
सर्वाभिषङ्गशमनी पावनी भुवि गौतमी ॥ २१ ॥

ब्रह्मोवाच ।

एतच्छ्रुत्वा स शर्यातिर्गौतमीतटमाश्रितः ।
ब्राह्मणेभ्यो धनं दत्त्वा तर्पयित्वा पितॄन्द्विजान् ॥ २२ ॥

पुरोहितं द्विजश्रेष्ठं प्रेषयित्वा धनान्वितम्।
अन्यत्र तीर्थे सार्थेषु दानं देहि(ददौ) प्रयत्नतः॥ २३ ॥
एतत्सर्वं न जानाति राज्ञः कृत्यं पुरोहितः।
गते तस्मिन्गुरौ राजा वैश्वामित्रे महात्मनि॥ २४ ॥
सर्वं बलं प्रेषयित्वा गङ्गातीरेऽग्निमाविशत्।
इत्युक्त्वा स तु राजेन्द्रो गङ्गां भानुं सुरानपि॥ २५ ॥
यदि दत्तं यदि हुतं यदि त्राता प्रजा मया।
तेन सत्येन सा साध्वी ममाऽऽयुष्येण जीवतु॥ २६ ॥
इत्युक्त्वाऽग्नौ प्रविष्टे तु शर्यातौ नृपसत्तमे।
तदैव जीविता भार्या राज्ञस्तस्य पुरोधसः॥ २७ ॥
अग्निप्रविष्टं राजानं श्रुत्वा विस्मयकारणम्।
पतिव्रतां तथा भार्यां मृतां जीवान्वितां पुनः २८॥
तदर्थं चापि राजानं त्यक्तात्मानं विशेषतः।
आत्मनश्च पुनः कृत्यमस्मरन्नृपतेर्गुरुः॥ २९ ॥
अहमप्यग्निमावेक्ष्य उत यास्ये प्रियान्तिकम्।
अथवेह तपस्तप्स्ये ततो निश्चयवान्द्विजः॥ ३० ॥
एतदेवाऽऽत्मनः कृत्यं मन्ये सुकृतमेव च।
जीवयामि च राजानं ततो यामि प्रियां पुनः॥ ३१ ॥
एतदेव शुभं मे स्यात्ततस्तुष्टाव भास्करम्।
न ह्यन्यः कोऽपि देवोऽस्ति सर्वाभीष्टप्रदो रवेः॥ ३२ ॥

मधुच्छन्दा उवाच।

नमोऽस्तु तस्मै सूर्याय मुक्तयेऽमिततेजसे।
छन्दोमयाय देवाय ओंकारार्थाय ते नमः॥ ३३ ॥

दुःखं जहौ सर्वममित्रसंभवं,
किं नाऽऽप्यते गौतमीसेवनेन ॥ १७ ॥
सविस्मयः पश्यति भृत्यवर्गं,
गोदावरीं स्तौति च संप्रहृष्टः ।
संमानयन्भृत्यगणं समग्र
मवाप रामः कमपि प्रमोदम् ॥
पुनः प्रभाते विमले तु सूर्ये,
विभीषणो दाशरथिं बभाषे ॥ १८ ॥

विभीषण उवाच ।

नाद्यापि तृप्तास्तु भवाम तीर्थे,
कंचिच्च कालं निवसाम चात्र ।
वत्स्या(सा)म चात्रैव पराश्चतस्रो,
रात्रीरथो याम वृतास्त्वयोध्याम् ॥ १६ ॥

ब्रह्मोवाच ।

तस्याथ वाक्यं हरयोऽनुमेनिरे
तथैव रात्रीरपराश्चतस्रः ।
संपूज्य देवं सकलेश्वरं तं,
भ्रातृप्रियं तीर्थमथो जगाम ॥ २० ॥
सिद्धेश्वरं नाम जगत्प्रसिद्धं,
यस्य प्रभावात्प्रबलो दशास्यः ।
एवं तु पञ्चाहमथोषिरे ते,
स्वं स्वं प्रतिष्ठापितलिङ्गमर्च्य ॥ २१ ॥

शुश्रूषणं तत्र करोति वायोः,
सुतोऽनुगामी हनुमान्नृपस्य ।
गच्छन्नृपेन्द्रो हनुमन्तमाह,
लिङ्गानि सर्वाणि विसर्जयस्व ॥ २२ ॥
मत्स्थापितान्युत्तममन्त्रविद्भि-
स्तथेतरैः शंकरकिंकरैश्च ।
नोद्वास्य पूजां परशंकरेण,
बाह्यं समायोज्यमहो भवस्य (?) ॥ २३ ॥
तिष्ठन्ति सुस्थास्तदनादरेण,
ते खड्गपत्रादिषु संभवन्ति ।
येऽश्रद्दधानाः शिवलिङ्गपूजां,
विधाय कृत्यं न समाचरन्ति ॥ २४ ॥
यथोचितं ते यमकिंकरैर्हि,
पच्यन्त एवाखिलदुर्गतीषु ।
रामाज्ञया वायुसुतो जगाम,
दोर्भ्यां न चोत्पाटयितुं शशाक ॥ २५ ॥
ततः स्वपुच्छेन ग्रहीतुकामः,
संवेष्ट्य लिङ्गं तु विसृष्टकामः ।
नैवाशकत्तन्महदद्भुतं स्या-
त्कपीश्वराणां नृपतेस्तथैव ॥ २६ ॥
कश्चालयेल्लब्धमहानुभावं,
महेशलिङ्गं पुरुषो मनस्वी ।

तन्निश्चलं प्रेक्ष्य महानुभावो,
नृपप्रवीरः सहसा जगाम ॥ २७ ॥
विप्रानथाऽऽमन्त्र्य विधाय पूजां,
प्रदक्षिणीकृत्य च रामचन्द्रः ।
शुद्धातिशुद्धेन हृदाऽखिलैस्तै-
र्लिङ्गानि सर्वाणि ननाम रामः ॥ २८ ॥
किष्किन्धवासिप्रवरैरशेषैः,
संसेवितं तीर्थमतो बभूव ।
अत्राऽऽप्लवादेव महान्ति पापा-
न्यपि क्षयं यान्ति न संशयोऽत्र ॥ २९ ॥
पुनश्च गङ्गां प्रणनाम भक्त्या,
प्रसीद मातर्मम गौतमीति ।
जल्पन्मुहुर्विस्मितचित्तवृत्ति-
र्विलोकयन्प्रणयन्गौतमीं ताम् ॥ ३० ॥
ततः प्रभृत्येतदतीव पुण्यं,
किष्किन्धतीर्थं विबुधा वदन्ति ।
पठेत्स्मरेद्वाऽपि शृणोति भक्त्या,
पापापहं किं पुनः स्नानदानैः ॥ ३१ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये किष्किन्धतीर्थ-
वर्णनं नाम सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥
गौतमीमाहात्म्येऽष्टाशीतितमोऽध्यायः ॥ ८८ ॥

———

# अथाष्टपञ्चाशदधिकशततमोऽध्यायः ।

## व्यासतीर्थवर्णनम्

ब्रह्मोवाच ।

व्यासतीर्थमिति ख्यातं प्राचेतसमतः परम् ।
नातः परतरं किंचित्पावनं सर्वसिद्धिदम् ॥ १ ॥
दश मे मानसाः पुत्राः स्रष्टारो जगतामपि ।
अन्तं जिज्ञासवस्ते वै पृथिव्या जग्मुरोजसा ॥ २ ॥
पुनः सृष्टाः पुनस्तेऽपि यातास्तान्समवेक्षितुम् ।
नैव तेऽपि समायाता ये गतास्ते गता गताः ॥ ३ ॥
तदोत्पन्ना महाप्राज्ञा दिव्या आङ्गिरसो (सा) मने ।
वेदवेदाङ्गतत्त्वज्ञाः सर्वशास्त्रविशारदाः ॥ ४ ॥
तेऽनुज्ञाता अङ्गिरसा गुरुं नत्वा तपोधनाः ।
तपसे निश्चिताः सर्वे नैव पृष्ट्वा तु मातरम् ॥ ५ ॥
सर्वेभ्यो ह्यधिका माता गुरुभ्यो गौरवेण हि ।
तदा नारद कोपेन सा शशाप तदाऽऽत्मजान् ॥ ६ ॥

मातोवाच ।

मामनादृत्य ये पुत्राः प्रवृत्ताश्चरितुं तपः ।
सर्वैरपि प्रकारैस्तन्न तेषां सिद्धिमेष्यति ॥ ७ ॥

ब्रह्मोवाच ।

नानादेशांश्च चिन्वानास्तपःसिद्धिं न यान्ति च ।
विघ्नमन्वेति तान्सर्वानितश्चेतश्च धावतः ॥ ८ ॥

क्वापि तद्राक्षसैर्विघ्नं क्वापि तन्मानुषैरभूत् ।
प्रमदाभिः क्वचिच्चापि क्वापि तद्देहदोषतः ॥ ९ ॥
एवं तु भ्रममाणास्ते ययुः सर्वे तपोनिधिम् ।
अगस्त्यं तपतां श्रेष्ठं कुम्भयोनिं जगद्गुरुम् ॥ १० ॥
नमस्कृत्वा ह्याङ्गिरसा ह्यग्निवंशसमुद्भवाः ।
दक्षिणाशापतिं शान्तं विनीताः प्रष्टुमुद्यताः ॥ ११ ॥

आङ्गिरसा ऊचुः ।

भगवन्केन दोषेण तपोऽस्माकं न सिध्यति ।
नानाविधैरप्युपायैः कुर्वतां च पुनः पुनः ॥ १२ ॥
किं कुर्मः कः प्रकारोऽत्र तपस्येव भवाम किम् ।
उपायं ब्रूहि विप्रेन्द्र ज्येष्ठोऽसि तपसा ध्रुवम् ॥ १३ ॥
ज्ञाताऽसि ज्ञानिनां ब्रह्मन्वक्ताऽसि वदतां वरः ।
शान्तोऽसि यमिनां नित्यं दयावान्प्रियकृत्तथा ॥ १४ ॥
अक्रोधनश्च न द्वेष्टा तस्माद्ब्रूहि विवक्षितम् ।
साहंकारा दयाहीना गुरुसेवाविवर्जिताः ॥
असत्यवादिनः क्रूरा न ते तत्त्वं विजानते ॥ १५ ॥

ब्रह्मोवाच ।

अगस्त्यः प्राय तान्सर्वान्क्षणं ध्यात्वा शनैः शनैः ॥ १६ ॥

अगस्त्य उवाच ।

शान्तात्मानो भवन्तो वै स्रष्टारो ब्रह्मणा कृताः ।
न पर्याप्तं तपश्चाभूत्स्मरध्वं स्मयकारणम् ॥ १७ ॥

ब्रह्मणा निर्मिताः पूर्वं ये गताः सुखमेधते ।
ये गताः पुनरन्वेष्टुं ते च त्वाङ्गिरसोऽभवन् ॥ १८ ॥
ते यूयं च पुनः काले याता याताः शनैः शनैः ।
प्रजापतेरप्यधिका भवितारो न संशयः ॥ १९ ॥
इतो यान्तु तपस्तप्तुं गङ्गां त्रैलोक्यपावनीम् ।
नोपायोऽन्योऽस्ति संसारे विना गङ्गां शिवप्रियाम् ॥ २० ॥
तत्राऽऽश्रमे पुण्यदेशे ज्ञानदं पूजयिष्यथ ।
स च्छेदयिष्यत्यखिलं संशयं वो महामतिः ॥
न सिद्धिः क्वापि केषांचिद्विना सद्गुरुणा यतः ॥ २१ ॥

ब्रह्मोवाच ।

ते तमूचुर्मुनिवरं ज्ञानदः कोऽभिधीयते ।
ब्रह्मा विष्णुर्महेशो वा आदित्यो वाऽपि चन्द्रमाः ॥ २२ ॥
अग्निश्च वरुणः कः स्याज्ज्ञानदो मुनिसत्तम ।
अगस्त्यः पुनरप्याह ज्ञानदः श्रूयतामयम् ॥ २३ ॥
या आपः सोऽग्निरित्युक्तो योऽग्निः सूर्यः स उच्यते ।
यश्च सूर्यः स वै विष्णुर्यश्च विष्णुः स भास्करः ॥ २४ ॥
यश्च ब्रह्मा स वै रुद्रो यो रुद्रः सर्वमेव तत् ।
यस्य सर्वं तु तज्ज्ञानं ज्ञानदः सोऽत्र कीर्त्यते ॥ २५ ॥
देशिकप्रेरकव्याख्याकृदुपाध्यायदेहदाः ।
गुरवः सन्ति बहवस्तेषां ज्ञानप्रदो महान् ॥ २६ ॥
तदेव ज्ञानमत्रोक्तं येन भेदो विहन्यते ।
एक एवाद्वयः शंभुरिन्द्रमित्राग्निनामभिः ॥
वदन्ति बहुधा विप्रा भ्रान्तोपकृतिहेतवे ॥ २७ ॥

ब्रह्मोवाच ।

एतच्छ्रुत्वा मुनेर्वाक्यं गाथा गायन्त एव ते ।
जग्मुः पश्चोत्तरां गङ्गां पश्च जग्मुश्च दक्षिणाम् ॥ २८ ॥
अगस्त्येनोदितान्देवान्पूजयन्तो यथाविधि ।
आसनेषु विशेषेण ह्यासीनास्तत्त्वचिन्तकाः ॥ २९ ॥
तेषां सर्वे सुरगणाः प्रीतिमन्तोऽभवन्मुने ।
स्रष्टृत्वं तु युगादौ यत्कल्पितं विश्वयोनिना ॥ ३० ॥
अधर्माणां निवृत्त्यर्थं वेदानां स्थापनाय च ।
लोकानामुपकारार्थं धर्मकामार्थसिद्धये ॥ ३१ ॥
पुराणस्मृतिवेदार्थधर्मशास्त्रार्थनिश्चये ।
स्रष्टृत्वं जगतामिष्टं तादृग्रूपा भविष्यथ ॥ ३२ ॥
प्रजापतित्वं तेषां वै भविष्यति शनैः क्रमात् ।
यदा ह्यधर्मो भविता वेदानां च पराभवः ॥ ३३ ॥
वेदानां व्यसनं तेभ्यो भाविव्यासास्ततस्तु ते ।
यदा यदा तु धर्मस्य ग्लानिर्वेदस्य दृश्यते ॥ ३४ ॥
तदा तदा तु ते व्यासा भविष्यन्त्युपकारिणः ।
तेषां यत्तपसः स्थानं गङ्गायास्तीरमुत्तमम् ॥ ३५ ॥
तत्र तत्र शिवो विष्णुरहमादित्य एव च ।
अग्निरापः सर्वमिति तत्र संनिहितं सदा ॥ ३६ ॥
नैतेभ्यः पावनं किंचिन्नै तेभ्यस्त्वधिकं क्वचित् ।
तत्तदाकरतां प्राप्तं परं ब्रह्मैव केवलम् ॥ ३७ ॥

सर्वात्मकः शिवो व्यापी सर्वभावस्वरूपधृक्।
विशेषतस्तत्र तीर्थे सर्वप्राण्यनुकम्पया ॥ ३८ ॥
सर्वैर्देवैरनुवृतस्तदनुग्रहकारकः ।
धर्मव्यासास्तु ते ज्ञेया वेदव्यासास्तथैव च ॥ ३९ ॥
तेषां तीर्थं तेन नाम्ना व्यपदिष्टं जगत्त्रये ।
पापपङ्कक्षालनाम्भो मोहध्वान्तमदापहम् ॥
सर्वसिद्धिप्रदं पुंसां व्यासतीर्थमनुत्तमम् ॥ ४० ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये व्यासतीर्थवर्णनं
नामाष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥
गौतमीमाहात्म्य एकोननवतितमोऽध्यायः ॥ ८९ ॥

---

## अथैकोनषष्ट्यधिकशततमोऽध्यायः ।

### वंजरासंगमतीर्थवर्णनम्

ब्रह्मोवाच ।

वंजरासंगमं नाम तीर्थं त्रैलोक्यविश्रुतम् ।
ऋषिभिः सेवितं नित्यं सिद्धै राजर्षिभिस्तथा ॥ १ ॥
दासत्वमगमत्पूर्वं नागानां गरुडः खगः ।
मातृदास्यात्तदा दुःखपरिसंतप्तमानसः ॥
कदाचिच्चिन्तयामास रहः स्थित्वा विनिश्वसन् ॥ २ ॥

गरुड उवाच ।

त एव धन्या लोकेऽस्मिन्कृतपुण्यास्त एव हि ।
नान्यसेवा कृता यैस्तु न येषां व्यसनागमः ॥ ३ ॥
सुखं तिष्ठन्ति गायन्ति स्वपन्ति च हसन्ति च ॥
स्वदेहप्रभवो धन्या धिग्धिगन्यवशे स्थितान् ॥ ४ ॥

ब्रह्मोवाच ।

इति चिन्तासमाविष्टो जननीमेत्य दुःखितः ।
पर्यपृच्छदमेयात्मा वैनतेयोऽथ मातरम् ॥ ५ ॥

गरुड उवाच ।

कस्यापराधान्मातस्त्वं पितुर्वा मम वाऽन्यतः ।
दासीत्वमाप्ता वद तत्कारणं मम पृच्छतः ॥ ६ ॥

ब्रह्मोवाच ।

साऽब्रवीत्पुत्रमात्मीयमरुणस्यानुजं प्रियम् ॥ ७ ॥

विनतोवाच ।

नैव कस्यापराधोऽस्ति स्वापराधो मयोदितः ।
यस्या वाक्यं विपर्येति सा दासी स्यान्मयोदितम् ॥ ८ ॥
कद्रूश्चापि तथैवाहं सा मया संयुता ययौ ।
कद्र्वा ममाभवद्वादश्छद्मनाऽहं तया जिता ॥ ९ ॥
विधिर्हि बलवांस्तात कां कां चेष्टां न चेष्टते ।
एवं दासीत्वमगमं कद्र्वाः कश्यपनन्दन ॥
यदा दासी तु जाताऽहं दासोऽभूस्त्वं द्विजन्मज ॥ १० ॥

ब्रह्मोवाच ।

तूष्णीं तदा बभूवासौ गरुडोऽतीव दुःखितः।
न किंचिदूचे जननीं चिन्तयन्भवितव्यताम् ॥ ११ ॥
कद्रूः कदाचित्सा प्राह पुत्राणां हितमिच्छती ।
आत्मनो भूतिमिच्छन्ती विनतां खगमातरम् ॥ १२ ॥

कद्रूरुवाच ।

पुत्रः सूर्यं नमस्कर्तुं तव यात्यनिवारितः ।
अहो लोकत्रयेऽप्यस्मिन्धन्याऽसि वत दास्यपि ॥ १३ ॥

ब्रह्मोवाच ।

स्वदुःखं गूहमाना सा कद्रूं प्राह सुविस्मिता ॥ ४ ॥

विनतोवाच ।

तव पुत्रास्तु किमिति रविं द्रष्टुं न यान्ति च ॥ १५ ॥

कद्रूरुवाच ।

पुत्रान्मदीयान्सुभगे नय नागालयं प्रति ।
समुद्रस्य समीपे तु तदाऽस्ते शीतलं सरः ॥ १६ ॥

ब्रह्मोवाच ।

सुपर्णस्त्ववहन्नागान्कद्रूं च विनता तथा ।
ततः प्रोवाच मुदिता वैनतेयस्य मातरम् ॥ १७ ॥
सुराणां नेतु निलयं गरुडो मत्सुतानिति ।
पुनः प्राह सर्पमाता गरुडं विनयान्वितम् ॥ १८ ॥

सर्पमातोवाच ।

पुत्रा मे द्रष्टुमिच्छन्ति हंसं त्रिजगतां गुरुम् ।
नमस्कृत्वा ततः सूर्यमेष्यन्ति निलयं मम ॥
हण्डे त्वं नय पुत्रान्मे सूर्यमण्डलमन्वहम् ॥ १६ ॥

ब्रह्मोवाच ।

सा वेपमाना विनता दीना कद्रूमभाषत ॥ २० ॥

विनतोवाच ।

नाहं क्षमा सर्पमातः पुत्रो मे नेष्यते सुतान् ।
दृष्ट्वा दिनकरं देवं पुनरेव प्रयान्तु ते ॥ २१ ॥

ब्रह्मोवाच ।

विनता स्वसुतं प्राह विहगानामधीश्वरम् ।
नमस्कर्तुमथेच्छन्ति नागाः स्वामित्वमागताः ॥ २२ ॥
भास्वन्तमित्युवाचेयं मां सर्पजननी हठात् ।
तथेत्युक्त्वा स गरुडो मामारोहन्तु पन्नगाः ॥ २३ ॥
तदाऽऽरूढं सर्पसैन्यं गरुडं विहगाधिपम् ।
शनैः शनैरुपगमद्यत्र देवो दिवाकरः ॥
ते दह्यमानास्तीक्ष्णेन भानुतापेन विव्यथुः ॥ २४ ॥

सर्पा ऊचुः ।

निवर्तस्व महाप्राज्ञ पतङ्गाय नमो नमः ।
अलं सूर्यस्य सदनं दग्धाः सूर्यस्य तेजसा ॥
यामस्त्वया वा गरुड विहाय त्वामथापि वा ॥ २५ ॥

ब्रह्मोवाच ।

एवं नागैरुच्यमान आदित्यं दर्शयामि वः ।
इत्युक्त्वा गगनं शीघ्रं जगामाऽऽदित्यसंमुखः ॥ २६ ॥
दग्धभोगा निपेतुस्ते द्वीपं तं वीरणं प्रति ।
बहवः शतसाहस्राः पीडिता दग्धविग्रहाः ॥ २७ ॥
पुत्राणामार्तसंनादं पतितानां महीतले(?) ।
आश्वासितुं समायाता तान्सा कद्रूः सुविह्वला ॥ २८ ॥
उवाच विनतां कद्रूस्तव पुत्रोऽतिदुष्कृतम् ।
कृतवानतिदुर्मेधा येषां शान्तिर्न विद्यते ॥ २९ ॥
नान्यथा कर्तुमायाति स्वामिवाक्यं फणीश्वरः ।
स काश्यपो बृहत्तेजा यद्यत्र स्यादनामयम् ॥ ३० ॥
भवेच्चैवं कथं शान्तिः पुत्राणां मम भामिनि ।
कद्र्वास्तद्वचनं श्रुत्वा विनता ह्यतिभीतवत् ॥ ३१ ॥
पुत्रमाह महात्मानं गरुडं विहगाधिपम् ॥ ३२ ॥

विनतोवाच ।

नेदं युक्ततरं पुत्र भूषणं विनयेन हि ।
वर्तितुं युक्तमित्युक्तं वैपरीत्यं न युज्यते ॥ ३३ ॥
नामित्रेष्वपि कर्तव्यं सद्भिर्जिह्मं कदाचन ।
श्रोत्रिये चान्त्यजे वाऽपि समं चन्द्रः प्रकाशते ॥ ३४ ॥
कुर्वन्त्यनिष्टं कपटैस्त एव मम पुत्रक ।
प्रसह्य कर्तुं ये साक्षादशक्ताः पुरुषाधमाः ॥ ३५ ॥

ब्रह्मोवाच ।

विनता च ततः प्राह कद्रूं तां सर्पमातरम् ॥ ३६ ॥

विनतोवाच ।

किं कृत्वा शान्तिरभ्येति पुत्राणां ते करोमि तत् ।
जरया तु गृहीतास्ते वद शान्तिं करोमि तत् ॥ ३७ ॥

ब्रह्मोवाच ।

कद्रूरप्याह विनतां रसातलगतं पयः ।
तेनाभिषेचितानां मे पुत्राणां शान्तिरेष्यति ॥ ३८ ॥
कद्र्वास्तद्वचनं श्रुत्वा रसातलगतं पयः ।
क्षणेनैव समानीय नागांस्तानभ्यषेचयत् ॥
ततः प्रोवाच गरुडो मघवानं शतक्रतुम् ॥ ३९ ॥

गरुड उवाच ।

मेघाश्चाप्यत्र वर्षन्तु त्रैलोक्यस्योपकारिणः ॥ ४० ॥

ब्रह्मोवाच ।

तथा ववर्ष पर्जन्यो नागानामभवच्छिवम् ।
रसातलभवं गाङ्गं नागसंजीवनं पयः ॥ ४१ ॥
जराशोकविनाशार्थमानीतं गरुडेन यत् ।
यत्राभिषेचिता नागास्तन्नागालयमुच्यते ॥ ४२ ॥
गरुडेन यतो वारि आनीतं तद्रसातलात् ।
तद्गाङ्गं वारि सर्वेषां सर्वपापप्रणाशनम् ॥ ४३ ॥
जराया वारणं यस्मान्नागानामभवच्छिवम् ।
रसातलभवं गाङ्गं नागसंजीवनं यतः ॥ ४४ ॥

जराशोकविनाशार्थं गङ्गाया दक्षिणे तटे।
साक्षादमृतसंवाहा वंजरा साऽभवन्नदी ॥ ४५ ॥
जरादारिद्र्यसंतापहारिणी क्लेशवारिणी।
रसातलभवा गङ्गा मर्त्यलोकभवा तु या ॥ ४६ ॥
तयोश्च संगमो यः स्यात्किं पुनस्तत्र वर्ण्यते।
यस्यानुस्मरणादेव नाशं यान्त्यघसंचयाः ॥ ४७ ॥
तत्र च स्नानदानानां फलं को वक्तुमीश्वरः।
सपादं तत्र तीर्थानां लक्षमाहुर्मनीषिणः ॥ ४८ ॥
सर्वसंपत्तिदातॄणां सर्वपापौघहारिणाम्।
वंजरासंगमसमं तीर्थं क्वापि न विद्यते ॥
यदनुस्मरणेनापि विपद्यन्ते विपत्तयः ॥ ४९ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये वंजरासंगमादिसपादलक्षतीर्थवर्णनं नामैकोनषष्ट्यधिकशततमोऽध्यायः ॥१५९॥
गौतमीमाहात्म्ये नवतितमोऽध्यायः ॥ ९० ॥

---

# अथ षष्ट्यधिकशततमोऽध्यायः।

## देवागमतीर्थवर्णनम्

ब्रह्मोवाच।

देवागमं नाम तीर्थं सर्वकामप्रदं शिवम्।
भुक्तिमुक्तिप्रदं नृणां पितॄणां तृप्तिकारकम् ॥ १ ॥

तत्र वृत्तं समाख्यास्ये तव यत्नेन नारद ।
देवानामसुराणां च स्पर्धाऽभूद्धनहेतवे ॥ २ ॥
स्वर्गः सुराणामभवदसुराणामिलाऽभवत् ।
कर्मभूमिमवष्टभ्य असुराः सर्वतोऽभवन् ॥ ३ ॥
देवानां यज्ञभागांश्च दातृन्घ्नन्त्यसुरास्ततः ।
ततः सुरगणाः सर्वे यज्ञभागैर्विना कृताः ॥ ४ ॥
व्यथिता मामुपाजग्मुः किं कृत्यमिति चाब्रुवन् ।
मया चोक्ताः सुरगणा युद्धे जित्वाऽसुरान्बलात् ॥ ५ ॥
भुवं प्राप्स्यथ कर्माणि हवींषि च यशांसि च ।
तथेत्युक्त्वा गता देवा भूमिं ते समरार्थिनः ॥ ६ ॥
दैत्याश्च दानवाश्चैव राक्षसा बलदर्पिताः ।
एकीभूत्वा ययुस्तेऽपि जयिनो युद्धकाङ्क्षिणः ॥ ७ ॥
अहिर्वृत्रो बलिस्त्वाष्ट्रिर्नमुचिः शम्बरो मयः ।
एते चान्ये च बहवो योद्धारो बलदर्पिताः ॥ ८ ॥
अग्निरिन्द्रोऽथ वरुणस्त्वष्टा पूषा तथाऽश्विनौ ।
मरुतो लोकपालाश्च नानायुद्धविशारदाः ॥ ९ ॥
ते दानवाः सर्व एव याम्यां वै दिशि संगरे ।
अकुर्वन्त महायत्नं दक्षिणार्णवसंस्थिताः ॥ १० ॥
त्रिकूटः पर्वतश्श्रेष्ठो राक्षसानां पुराऽभवत् ।
तद्बलेन ययुः सर्वे तैः सार्धं दक्षिणार्णवम् ॥ ११ ॥
सर्वेषां मेलनं यत्र पर्वतो मलयस्तु सः ।
मलयस्यापि देशोऽसौ देवारीणामभूत्तदा ॥ १२ ॥

देवानां गौतमीतीरे तत्र संनिहितः शिवः ।
इति तेषां समायोगो देवानामभवत्किल ॥ १३ ॥
देवाः स्वरथमारूढास्तत्र तत्र समागमन् ।
गौतम्याः सरिदम्बायाः पुलिने विमलाशयाः ॥ १४ ॥
प्रसन्नाऽभीष्टदा या स्यात्पितॄणामखिलस्य तु ।
ततो देवगणाः सर्वे स्तुत्वा देवं महेश्वरम् ॥
अभयं चिन्तयामासुस्ते सर्वेऽथ परस्परम् ॥ १५ ॥

देवा ऊचुः ।

अत्राप्युपायः कोऽस्माकं निर्जितानां परैर्हठात् ।
एकमेवात्र नः श्रेयो विजयो वाऽथवा मृतिः ॥
सपत्नैरभिभूतानां जीवितं धिङ्मनस्विनाम् ॥ १६ ॥

ब्रह्मोवाच ।

एतस्मिन्नन्तरे पुत्र वागुवाचाशरीरिणी ॥ १७ ॥

आकाशवागुवाच ।

क्लेशेनालं सुरगणा गौतमीमाशु गच्छत ।
भक्त्या हरिहरौ तत्र समाराधयतेश्वरौ ॥ १८ ॥
गोदावर्यास्तयोश्चैव प्रसादात्किंतु दुष्करम् ॥ १९ ॥

ब्रह्मोवाच ।

प्रसन्नाभ्यां हरीशाभ्यां देवा जयमभीप्सितम् ।
अवाप्य सर्वतो जग्मुः पालयन्तो दिवौकसः ॥ २० ॥
यत्र देवागमो जातस्तत्तीर्थं तेन विश्रुतम् ।
देवागमं प्रशंसन्ति मुनयस्तत्त्वदर्शिनः ॥ २१ ॥

तत्राशीतिसहस्राणि शिवलिङ्गानि नारद ।
देवागमः पर्वतोऽसौ प्रिय इत्यपि कथ्यते ॥
ततः प्रभृति तत्तीर्थं देवप्रियमतो विदुः ॥ २२ ॥

इति श्री महापुराणे आदिब्राह्मे तीर्थमाहात्म्ये देवागमतीर्थवर्णनं नाम षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

गौतमीमाहात्म्य एकनवतितमोऽध्यायः ॥ ९१ ॥

———

# अथैकषष्ट्यधिकशततमोऽध्यायः ।

## कुशतर्पणतीर्थवर्णनम्

ब्रह्मोवाच ।

कुशतर्पणमाख्यातं प्रणीतासंगमं तथा ।
तीर्थं सर्वेषु लोकेषु भुक्तिमुक्तिप्रदायकम् ॥ १ ॥
तस्य स्वरूपं वक्ष्यामि शृणु पापहरं शुभम् ।
विन्ध्यस्य दक्षिणे पार्श्वे सह्यो नाम महागिरिः ॥ २ ॥
यदङ्घ्रिभ्योऽभवन्नद्यो गोदाभीमरथीमुखाः ।
यत्राभवत्तद्विरजमेकवीरा च यत्र सा ॥ ३ ॥
न तस्य महिमा कैश्चिदपि शक्योऽनुवर्णितम् ।
तस्मिन्गिरौ पुण्यदेशे शृणु नारद यत्नतः ॥ ४ ॥
गुह्याद्गुह्यतरं वक्ष्ये साक्षाद्वेदोदितं शुभम् ।
यन्न जानन्ति मुनयो देवाश्च पितरोऽसुराः ॥ ५ ॥

तदहं प्रीतये वक्ष्ये श्रवणात्सर्वकामदम् ।
परः स पुरुषो ज्ञेयो ह्यव्यक्तोऽक्षर एव तु ॥ ६ ॥
अपरश्च क्षरस्तस्मात्प्रकृत्यन्वित एव च ।
निराकारात्सावयवः पुरुषः समजायत ॥ ७ ॥
तस्मादापः समुद्भूता अद्भ्यश्च पुरुषस्तथा ।
ताभ्यामब्जं समुद्भूतं तत्राहमभवं मुने ॥ ॥ ८ ॥
पृथिवी वायुराकाश आपो ज्योतिस्तथैव च ।
एते मत्तः पूर्वतरा एकदैवाभवन्मुने ॥ ९ ॥
एतानेव प्रपश्यामि नान्यत्स्थावरजङ्गमम् ।
नैव वेदास्तदा चाऽऽसन्नाहं द्रष्टाऽस्मि किंचन ॥ १० ॥
यस्मादहं समुद्भूतो न पश्येयं तमप्यथ ।
तूष्णीं स्थिते मयि तदा अश्रौषं वाचमुत्तमाम् ॥ ११ ॥

आकाशवागुवाच ।

ब्रह्मन्कुरु जगत्सृष्टिं स्थावरस्य चरस्य च ॥ १२ ॥

ब्रह्मोवाच ।

ततोऽहमब्रवं वाचं परुषां तत्र नारद ।
कथं स्रक्ष्ये क्व वा स्रक्ष्ये केन स्रक्ष्य इदं जगत् ॥ १३ ॥
सैव वागब्रवीद्देवी प्रकृतिर्याऽभिधीयते ।
विष्णुना प्रेरिता माता जगदीशा जगन्मयी ॥ १४ ॥

आकाशवागुवाच ।

यज्ञं कुरु ततः शक्तिस्ते भवित्री न संशयः ।
यज्ञो वै विष्णुरित्येषा श्रुतिर्ब्रह्मन्सनातनी ॥ १५ ॥
किं यज्वनामसाध्यं स्यादिह लोके परत्र च ॥ १६ ॥

ब्रह्मोवाच ।

पुनस्तामब्रवं देवीं क्व वा केनेति तद्वद ।
यज्ञः कार्यो महाभागे ततः सोवाच मां प्रति ॥ १७ ॥

आकाशवागुवाच ।

ओंकारभूता या देवी मातृरूपा जगन्मयी ।
कर्मभूमौ यजस्वेह यज्ञेशं यज्ञपूरुषम् ॥ १८ ॥
स एव साधनं ते स्यात्तेन तं यज सुव्रत ।
यज्ञः स्वाहा स्वधा मन्त्रा ब्राह्मणा हविरादिकम् ॥ १९ ॥
हरिरेवाखिलं तेन सर्वं विष्णोरवाप्यते ॥ २० ॥

ब्रह्मोवाच ।

पुनस्तामब्रवं देवीं कर्मभूः क्व विधीयते ।
तदा नारद नैवाऽऽसीद्भागीरथ्यथ नर्मदा ॥ २१ ॥
यमुना नैव तापी सा सरस्वत्यथ गौतमी ।
समुद्रो वा नदः कश्चिन्न सरः सरितोऽमलाः ॥
सा शक्तिः पुनरप्येवं मामुवाच पुनः पुनः ॥ २२ ॥

दैवी वागुवाच ।

सुमेरोर्दक्षिणे पार्श्वे तथा हिमवतो गिरेः ।
दक्षिणे चापि विन्ध्यस्य सह्याद्रेर्वाथ दक्षिणे ॥
सर्वस्य सर्वकाले तु कर्मभूमिः शुभोदया ॥ २३ ॥

ब्रह्मोवाच ।

तत्तु वाक्यमथो श्रुत्वा त्यक्त्वा मेरुं महागिरिम् ।
तं प्रदेशमथाऽऽगत्य स्थातव्यं क्वेत्यचिन्तयम् ॥
ततो मामब्रवीत्सैव विष्णोर्वाण्यशरीरिणी ॥ २४ ॥

आकाशवागुवाच ।

इतो गच्छ इतस्तिष्ठ तथोपविश चात्र हि ।
संकल्पं कुरु यज्ञस्य स ते यज्ञः समाप्यते ॥ २५ ॥
कृते चैवाथ संकल्पे यज्ञार्थे सुरसत्तम ।
यद्वदन्त्यखिला वेदा विधे तत्तत्समाचर ॥ २६ ॥

ब्रह्मोवाच ।

इतिहासपुराणानि यदन्यच्छन्दगोचरम् ।
स्वतो मुखे मम प्रायादभूच्च स्मृतिगोचरम् ॥ २७ ॥
वेदार्थश्च मया सर्वो ज्ञातोऽसौ तत्क्षणेन च ।
ततः पुरुषसूक्तं तदस्मरं लोकविश्रुतम् ॥ २८ ॥
यज्ञोपकरणं सर्वं तदुक्तं च त्वकल्पयम् ।
तदुक्तेन प्रकारेण यज्ञपात्राण्यकल्पयम् ॥ २९ ॥
अहं स्थित्वा यत्र देशे शुचिर्भूत्वा यतात्मवान् ।
दीक्षितो विप्रदेशोऽसौ मन्नाम्ना तु प्रकीर्तितः ॥ ३० ॥
मद्देवयजनं पुण्यं नाम्ना ब्रह्मगिरिः स्मृतः ।
चतुरशीतिपर्यन्तं योजनानि महामुने ॥ ३१ ॥
मद्देवयजनं पुण्यं पूर्वतो ब्रह्मणो गिरेः ।
तत्र मध्ये वेदिका स्याद्गार्हपत्योऽस्य(?)दक्षिणे ॥ ३२ ॥
तत्र चाऽऽहवनीयस्य एवमग्नींस्त्वकल्पयम्(?) ।
विना पत्न्या न सिध्येत यज्ञः श्रुतिनिदर्शनात् ॥ ३३ ॥
शरीरमात्मनोऽहं वै द्वेधा चाकरवं मुने ।
पूर्वार्धेन ततः पत्नी ममाभूद्यज्ञसिद्धये ॥ ३४ ॥

उत्तरेण त्वहं तद्वदर्थो जाया इति श्रुतेः ।
कालं वसन्तमुत्कृष्टमाज्यरूपेण नारद ॥ ३५ ॥
अकल्पयं तथा चेध्मं ग्रीष्मं चापि शरद्धविः ।
ऋतुं च प्रावृषं पुत्र तदा बर्हिरकल्पयम् ॥ ३६ ॥
छन्दांसि सप्त वै तत्र तदा परिधयोऽभवन् ।
कलाकाष्ठानिमेषा हि समित्पात्रकुशाः स्मृताः ॥ ३७ ॥
योऽनादिश्च त्वनन्तश्च स्वयं कालोऽभवत्तदा ।
यूपरूपेण देवर्षे योक्त्रं च पशुबन्धनम् ॥ ३८ ॥
सत्त्वादित्रिगुणाः पाशा नैव तत्राभवत्पशुः ।
ततोऽहमब्रवं वाचं वैष्णवीमशरीरिणीम् ॥ ३६ ॥
विनैव पशुना नायं यज्ञः परिसमाप्यते ।
ततो मामवदद्देवी सैव नित्याऽशरीरिणी ॥ ४० ॥

आकाशवागुवाच ।

पौरुषेणाथ सूक्तेन स्तुहि तं पुरुषं परम् ॥ ४१ ॥

ब्रह्मोवाच ।

तथेत्युक्त्वा स्तूयमाने देवदेवे जनार्दने ।
मम चोत्पादके भक्त्या सूक्तेन पुरुषस्य हि ॥ ४२ ॥
सा च मामब्रवीद्देवी ब्रह्मन्मां त्वं पशुं कुरु ।
तदा विज्ञाय पुरुषं जनकं मम चाव्ययम् ॥ ४३ ॥
कालयूपस्य पार्श्वे तं गुणपाशैर्निवेशितम् ।
बर्हिस्थितमहं प्रौक्षं पुरुषं जातमग्रतः ॥ ४४ ॥
एतस्मिन्नन्तरे तत्र तस्मात्सर्वमभूदिदम् ।
ब्राह्मणास्तु मुखात्तस्याभवन्बाह्वोश्च क्षत्रियाः ॥ ४५ ॥

मुखादिन्द्रस्तथाऽग्निश्च श्वसनः प्राणतोऽभवत्।
दिशः श्रोत्रात्तथा शीर्ष्णः सर्वः स्वर्गोऽभवत्तदा ॥ ४६ ॥
मनसश्चन्द्रमा जातः सूर्योऽभूच्चक्षुषस्तथा ।
अन्तरिक्षं तथा नाभेरूरुभ्यां विश एव च ॥ ४७ ॥
पद्भ्यां शूद्रश्च संजातस्तथा भूमिरजायत ।
ऋषयो रोमकूपेभ्य ओषध्यः केशतोऽभवन् ॥ ४८ ॥
ग्राम्यारण्याश्च पशवो नखेभ्यः सर्वतोऽभवन् ।
कृमिकीटपतङ्गादि पायूपस्थादजायत ॥ ४९ ॥
स्थावरं जङ्गमं किंचिद्दृश्यादृश्यं च किंचन ।
तस्मात्सर्वमभूद्देवा मत्तश्चाप्यभवन्पुनः ॥
एतस्मिन्नन्तरे सैव विष्णोर्वागब्रवीच्च माम् ॥ ५० ॥

आकाशवागुवाच ।

सर्वं संपूर्णमभवत्सृष्टिर्जाता तथेप्सिता ।
इदानीं जुहुधि ह्यग्नौ पात्राणि च समानि च ॥ ५१ ॥
विसर्जय तथा यूपं प्रणीतां च कुशांस्तथा ।
ऋत्विग्रूपं यज्ञरूपमुद्देश्यं ध्येयमेव च ॥ ५२ ॥
स्रुवं च पुरुषं पाशान्सर्वं ब्रह्मन्विसर्जय ॥ ५३ ॥

ब्रह्मोवाच ।

तद्वाक्यसमकालं तु क्रमशो यज्ञयोनिषु ।
गार्हपत्ये दक्षिणाग्नौ तथा चैव महामुने ॥ ५४ ॥
पूर्वस्मिन्नपि चैवाग्नौ क्रमशो जुह्वतस्तदा ।
तत्र तत्र जगद्योनिमनुसंधाय पूरुषम् ॥ ५५ ॥

मन्त्रपूतं शुचिः सम्यग्यज्ञदेवो जगन्मयः ।
लोकनाथो विश्वकर्ता कुण्डानां तत्र संनिधौ ॥ ५६ ॥
शुक्लरूपधरो विष्णुर्भवेदाहवनीयके ।
श्यामो विष्णुर्दक्षिणाग्नेः पीतो गृहपतेः कवेः ॥ ५७ ॥
सर्वकालं तेषु विष्णुरतो देशेषु संस्थितः ।
न तेन रहितं किंचिद्विष्णुना विश्वयोनिना ॥ ५८ ॥
प्रणीतायाः प्रणयनं मन्त्रैश्चाकरवं ततः ।
प्रणीतोदकमप्येतत्प्रणीतेति नदी शुभा ॥ ५९ ॥
व्यसर्जयं प्रणीतां तां मार्जयित्वा कुशैरथ ।
मार्जने क्रियमाणे तु प्रणीतोदकबिन्दवः ॥ ६० ॥
पतितास्तत्र तीर्थानि जातानि गुणवन्ति च ।
संजाता मुनिशार्दूल स्नानात्क्रतुफलप्रदा ॥ ६१ ॥
याऽलंकृता सर्वकालं देवदेवेन शार्ङ्गिणा ।
सोपानपङ्क्तिः सर्वेषां वैकुण्ठारोहणाय सा ॥ ६२ ॥
संमार्जिताः कुशा यत्र पतिता भूतले शुभे ।
कुशतर्पणमाख्यातं बहुपुण्यफलप्रदम् ॥ ६३ ॥
कुशैश्च तर्पिताः सर्वे कुशतर्पणमुच्यते ।
पश्चाच्च संगता तत्र गौतमी कारणान्तरात् ॥ ६४ ॥
प्रणीतायां महाबुद्धे प्रणीतासंगमोऽभवत् ।
कुशतर्पणदेशे तु तत्तीर्थं कुशतर्पणम् ॥ ६५ ॥
तत्रैव कल्पितो यूपो मया विन्ध्यस्य चोत्तरे ।
विसृष्टो लोकपूज्योऽसौ विष्णोरासीत्समाश्रयः ॥ ६६ ॥

अक्षयश्चाभवच्छ्रीमानक्षयोऽसौ वटोऽभवत् ।
नित्यश्च कालरूपोऽसौ स्मरणात्क्रतुपुण्यदः ॥ ६७ ॥
मद्देवयजनं चेदं दण्डकारण्यमुच्यते ।
संपूर्णे तु क्रतौ विष्णुर्मया भक्त्या प्रसादितः ॥ ६८ ॥
यो विराडुच्यते वेदे यस्मान्मूर्तमजायत ।
यस्माच्च मम चोत्पत्तिर्यस्येदं विकृतं जगत् ॥ ६९ ॥
तमहं देवदेवेशमभिवन्द्य व्यसर्जयम् ।
योजनानि चतुर्विंशन्मद्देवयजनं शुभम् ॥ ७० ॥
तस्मादद्यापि कुण्डानि सन्ति च त्रीणि नारद ।
यज्ञेश्वरस्वरूपाणि विष्णोर्वै चक्रपाणिनः ॥ ७१ ॥
ततः प्रभृति चाऽऽख्यातं मद्देवयजनं च तत् ।
तत्रस्थः कृमिकीटादिः सोऽप्यन्ते मुक्तिभाजनम् ॥ ७२ ॥
धर्मबीजं मुक्तिबीजं दण्डकारण्यमुच्यते ।
विशेषाद्गौतमीश्लिष्टो देशः पुण्यतमोऽभवत् ॥ ७३ ॥
प्रणीतासंगमे चापि कुशतर्पण एव वा ।
स्नानदानादि यः कुर्यात्स गच्छेत्परमं पदम् ॥ ७४ ॥
स्मरणं पठनं वाऽपि श्रवणं चापि भक्तितः ।
सर्वकामप्रदं पुंसां भुक्तिमुक्तिप्रदं विदुः ॥ ७५ ॥
उभयोस्तीरयोस्तत्र तीर्थान्याहुर्मनीषिणः ।
षडशीतिसहस्राणि तेषु पुण्यं पुरोदितम् ॥ ७६ ॥
वाराणस्या अपि मुने कुशतर्पणमुत्तमम् ।
नानेन सदृशं तीर्थं विद्यते सचराचरे ॥ ७७ ॥

ब्रह्महत्यादिपापानां स्मरणादपि नाशनम् ।
तीर्थमेतन्मुने प्रोक्तं स्वर्गद्वारं महीतले ॥ ६८ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये प्रणीतासंगम-
कुशतर्पणादिषडशीतिसहस्रतीर्थवर्णनं नामैकषष्ट्य-
धिकशततमोऽध्यायः ॥ १६१ ॥
गौतमीमाहात्म्ये द्विनवतितमोऽध्यायः ॥ ९२ ॥

---

## अथ द्विषष्ट्यधिकशततमोऽध्यायः ।

### मन्युतीर्थवर्णनम्

ब्रह्मोवाच ।

मन्युतीर्थमिति ख्यातं सर्वपापप्रणाशनम् ।
सर्वकामप्रदं नृणां स्मरणादघनाशनम् ॥ १ ॥
तस्य प्रभावं वक्ष्यामि शृणुष्वावहितो मुने ।
देवानां दानवानां च संगरोऽभून्मिथः पुरा ॥ २ ॥
तत्राजयन्नैव सुरा दानवा जयिनोऽभवन् ।
पराङ्मुखाः सुरगणाः संगराद्गतचेतसः ॥ ३ ॥
मामभ्येत्य समूचुस्ते देहि नोऽभयकारणम् ।
तानहं प्रत्यवोचं वै गङ्गां गच्छत सर्वशः ॥ ४ ॥
तत्र वै गौतमीतीरे स्तुत्वा देवं महेश्वरम् ।
अनपायनिरायाससहजानन्दसुन्दरम् ॥ ५ ॥

लप्स्यते सर्वविबुधा जयहेतुर्महेश्वरात् ।
तथेत्युक्त्वा सुरगणाः स्तुवन्ति स्म महेश्वरम् ॥ ६ ॥
तपोऽतप्यन्त केचिद्वै ननृतुश्च तथाऽपरे ।
अस्नापयंश्च केचिच्चापूजयंश्च तथाऽपरे ॥ ७ ॥
ततः प्रसन्नो भगवाञ्शूलपाणिर्महेश्वरः ।
देवानथाब्रवीत्तुष्टो व्रियतां यदभीप्सितम् ॥ ८ ॥
देवा ऊचुः सुरपति विजयाय ददस्व नः ।
पुरुषं परमश्लाघ्यं रणेषु पुरतः स्थितम् ॥ ९ ॥
यद्बाहुबलमाश्रित्य भवामः सुखिनो वयम् ।
तथेत्युवाच भगवान्देवान्प्रति महेश्वरः ॥ १० ॥
आत्मनस्तेजसा कश्चिन्निर्मितः परमेष्ठिना ।
मन्युनामानमत्युग्रं देवसैन्यपुरोगमम् ॥ ११ ॥
तं नत्वा त्रिदशाः सर्वे शिवं नत्वा स्वमालयम् ।
मन्युना सह चाभेत्य पुनर्युद्धाय तस्थिरे ॥ १२ ॥
युद्धे स्थित्वा तु दनुजैर्दैतेयैश्च महाबलैः ।
विबुधा जातसंन्नद्धा मन्युमूचुः पुरः स्थिताः ॥ १३ ॥

देवा ऊचुः ।

सामर्थ्यं तव पश्यामः पश्चाद्योत्स्यामहे परैः ।
तस्माद्दर्शय चाऽऽत्मानं मन्योऽस्माकं युयुत्सताम् ॥ १४ ॥

ब्रह्मोवाच ।

तद्देववचनं श्रुत्वा मन्युराह स्मयन्निव ॥ १५ ॥

मन्युरुवाच ।

जनिता मम देवेशः सर्वज्ञः सर्वदृक्प्रभुः ।
यः सर्वं वेत्ति सर्वेषां धामनाम मनःस्थितम् ॥ १६ ॥
नैव कश्चिच्च तं वेत्ति यः सर्वं वेत्ति सर्वदा ।
अमूर्तं मूर्तमप्येतद्वेत्ति कर्ता जगन्मयः ॥ १७ ॥
परोऽसौ भगवान्साक्षात्तथा दिव्यन्तरिक्षगः ।
कस्तस्य रूपं यो वेद कस्य कर्ता जगन्मयः ॥ १८ ॥
एवं विधादहं जातो मां कथं वेत्तुमर्हथ ।
अथवा द्रष्टुकामा वै भवन्तो माऽनुपश्यत ॥ १६ ॥

ब्रह्मोवाच ।

इत्युक्त्वा दर्शयामास मन्यू रूपं स्वकं महत् ।
तार्तीयचक्षुषोद्भूतं भवस्य परमेष्ठिनः ॥ २० ॥
तेजसा संभृतं रूपं यतः सर्वं तदुच्यते ।
पौरुषं पुरुषेष्वेव अहंकारश्च जन्तुषु ॥ २१ ॥
क्रोधः सर्वस्य यो भीम उपसंहारकृद्भवेत् ।
तं शंकरप्रतिनिधिं ज्वलन्तं निजतेजसा ॥ २२ ॥
सर्वायुधधरं दृष्ट्वा प्रणेमुः सर्वदेवताः ।
वित्रेसुर्दैत्यमनुजाः कृताञ्जलिपुटाः सुराः ॥ २३ ॥
भूत्वा मन्युमथोचुस्ते त्वं सेनानीः प्रभो भव ।
त्वया दत्तमिदं राज्यं मन्यो भोक्ष्यामहे वयम् ॥ २४ ॥
तस्मात्सर्वेषु कार्येषु जेता त्वं जयवर्धनः ।
त्वमिन्द्रस्त्वं च वरुणो लोकपालास्त्वमेव च ॥ २५ ॥

अस्मासु सर्वदेवेषु प्रविश त्वं जयाय वै ।
मन्युः प्रोवाच तान्सर्वान्विना मत्तो न किंचन ॥ २६ ॥
सर्वेष्वन्तः प्रविष्टोऽहं न मां जानाति कश्चन ।
स एव भगवान्मन्युस्ततो जातः पृथक्पृथक् ॥ २७ ॥
स एव रुद्ररूपी स्याद्रुद्रो मन्युः शिवोऽभवत् ।
स्थावरं जङ्गमं चैव सर्वं व्याप्तं हि मन्युना ॥ २८ ॥
तमवाप्य सुराः सर्वे जयमापुश्च संगरे ।
जयो मन्युश्च शौर्यं च ईशतेजःसमुद्भवम् ॥ २९ ॥
मन्युना जयमाप्याथ कृत्वा दैत्यैश्च संगमम् ।
यथागतं ययुः सर्वे मन्युना परिरक्षिताः ॥ ३० ॥
यत्र वै गौततीतीरे शिवमाराध्य ते सुराः ।
मन्युमापुर्जयं चैव मन्युतीर्थं तदुच्यते ॥ ३१ ॥
उत्पत्तिं च तथा मन्योर्यो नरः प्रयतः स्मरेत् ।
विजयो जायते तस्य न कैश्चित्परिभूयते ॥ ३२ ॥
न मन्युतीर्थसदृशं पावनं हि महामुने ।
यत्र साक्षान्मन्युरूपी सर्वदा शंकरः स्थितः ॥
तत्र स्नानं च दानं च स्मरणं सर्वकामदम् ॥ ३३ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये मन्युतीर्थवर्णनं नाम द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥
गौतमीमाहात्म्ये त्रिनवतितमोऽध्यायः ॥ ९३ ॥

# अथ त्रिषष्ट्यधिकशततमोऽध्यायः ।

## सारस्वततीर्थवर्णनम्

ब्रह्मोवाच ।

सारस्वतं नाम तीर्थं सर्वकामप्रदं शुभम् ।
भुक्तिमुक्तिप्रदं नृणां सर्वपापप्रणाशनम् ॥ १ ॥
सर्वरोगप्रशमनं सर्वसिद्धिप्रदायकम् ।
तत्रेमं शृणु वृत्तान्तं विस्तरेणाथ नारद ॥ २ ॥
पुष्पोत्कटात्पूर्वभागे पर्वतो लोकविश्रुतः ।
शुभ्रो नाम गिरिश्रेष्ठो गौतम्या दक्षिणे तटे ॥ ३ ॥
शाकल्य इति विख्यातो मुनिः परमनैष्ठिकः ।
तस्मिञ्शुभ्रे पुण्यगिरौ तपस्तेपे ह्यनुत्तमम् ॥ ४ ॥
तपस्यन्तं द्विजश्रेष्ठं गौतमीतीरमाश्रितम् ।
सर्वे भूतगणा नित्यं प्रणमन्ति स्तुवन्ति तम् ॥ ५ ॥
अग्निशुश्रूषणपरं वेदाध्ययनतत्परम् ।
ऋषिगन्धर्वसुमनःसेविते तत्र पर्वते ॥ ६ ॥
तस्मिन्गिरौ महापुण्ये देवद्विजभयंकरः ।
यज्ञद्वेषी ब्रह्महन्ता परशुर्नाम राक्षसः ॥ ७ ॥
कामरूपी विचरति नानारूपधरो वने ।
क्षणं च ब्रह्मरूपेण कदाचिद्व्याघ्ररूपधृक् ॥ ८ ॥
कदाचिद्देवरूपेण कदाचित्पशुरूपधृक् ।
कदाचित्प्रमदारूपः कदाचिन्मृगरूपतः ॥ ९ ॥

यथोचितं कुरु सखे तथाऽपि शृणु मे वचः।
निहन्तुमप्युद्यतेषु वक्तव्यं हितमुत्तमैः ॥ २८ ॥
ब्राह्मणोऽहं वज्रतनुः सर्वतो रक्षको हरिः।
पादौ रक्षतु मे विष्णुः शिरो देवो जनार्दनः ॥ २९ ॥
बाहू रक्षतु वाराहः पृष्ठं रक्षतु कूर्मराट्।
हृदयं रक्षतात्कृष्णो ह्यङ्गुली रक्षतान्मृगः ॥ ३० ॥
मुखं रक्षतु वागीशो नेत्रे रक्षतु पक्षिगः।
श्रोत्रं रक्षतु वित्तेशः सर्वतो रक्षताद्भवः ॥
नानापत्स्वेकशरणं देवो नारायणः स्वयम् ॥ ३१ ॥

ब्रह्मोवाच।

एवमुक्त्वा तु शाकल्यो नय वा भक्ष वा सुखम्।
मां राक्षसेन्द्र परशो त्वमिदानीमतन्द्रितः ॥ ३२ ॥
राक्षसस्तस्य वचनाद्भक्षणाय समुद्यतः।
नास्त्येव हृदये नूनं पापिनां करुणाकणः ॥ ३३ ॥
दंष्ट्राकरालवदनो गत्वा तस्यान्तिकं तदा।
ब्राह्मणं तं निरीक्ष्यैवं परशुर्वाक्यमब्रवीत् ॥ ३४ ॥

परशुरुवाच।

शङ्खचक्रगदापाणिं त्वां पश्येऽहं द्विजोत्तम।
सहस्रपादशिरसं सहस्राक्षकरं विभुम् ॥ ३५ ॥
सर्वभूतैकनिलयं छन्दोरूपं जगन्मयम्।
त्वामद्य विप्र पश्यामि नास्ति ते पूर्वकं वपुः ॥ ३६ ॥

तस्मात्प्रसादये विप्र त्वमेव शरणं भव ।
ज्ञानं देहि महाबुद्धे तीर्थं ब्रह्मघनिष्कृतिम् ॥ ३७ ॥
महतां दर्शनं ब्रह्मञ्जायते नहि निष्फलम् ।
द्वेषादज्ञानतो वाऽपि प्रसङ्गाद्वा प्रमादतः ॥ ३८ ॥
अयसः स्पर्शसंस्पर्शो रुक्मत्वायैव जायते ॥ ३९ ॥

ब्रह्मोवाच ।

एतद्वाक्यं समाकर्ण्य राक्षसेन समीरितम् ।
शाकल्यः कृपया प्राह वरदा सा सरस्वती ॥ ४० ॥
तवाचिराद्दैत्यपते ततः स्तुहि जनार्दनम् ।
मनोरथफलप्राप्तौ नान्यन्नारायणस्तुतेः ॥ ४१ ॥
किंचिदप्यस्ति लोकेऽस्मिन्कारणं शृणु राक्षस ।
प्रसन्ना तव सा देवी मद्वाक्याच्च भविष्यति ॥ ४२ ॥

ब्रह्मोवाच ।

तथेत्युक्त्वा स परशुर्गङ्गां त्रैलोक्यपावनीम् ।
स्नात्वा शुचिर्यतमना गङ्गामभिमुखः स्थितः ॥ ४३ ॥
तत्रापश्यद्दिव्यरूपां दिव्यगन्धानुलेपनाम् ।
सरस्वतीं जगद्धात्रीं शाकल्यवचने स्थिताम् ॥ ४४ ॥
जगज्जाड्यहरां विश्वजननीं भुवनेश्वरीम् ।
तामुवाच विनीतात्मा परशुर्गतकल्मषः ॥ ४५ ॥

परशुरुवाच ।

गुरुः शाकल्य इत्याह माकान्तं स्तुहि विध्वजम् ।
तव प्रसादात्सा शक्तिर्यथा मे स्यात्तथा कुरु ॥ ४६ ॥

ब्रह्मोवाच ।

तथाऽस्त्विति च सा प्राह परशुं श्रीसरस्वती ।
सरस्वत्याः प्रसादेन परशुस्तं जनार्दनम् ॥ ४७ ॥
तुष्टाव विविधैर्वाक्यैस्ततस्तुष्टोऽभवद्धरिः ।
वरं प्रादाद्राक्षसाय कृपासिन्धुर्जनार्दनः ॥ ४८ ॥

जनार्दन उवाच ।

यद्यन्मनोगतं रक्षस्तत्तत्सर्वं भविष्यति ॥ ४९ ॥

ब्रह्मोवाच ।

शाकल्यस्य प्रसादेन गौतम्याश्च प्रसादतः ।
सरस्वत्याः प्रसादेन नरसिंहप्रसादतः ॥ ५० ॥
पापिष्ठोऽपि तदा रक्षः परशुर्दिवमेयिवान् ।
सर्वतीर्थाङ्घ्रिपद्मस्य प्रसादाच्छार्ङ्गधन्वनः ॥ ५१ ॥
ततः प्रभृति तत्तीर्थं सारस्वतमिति श्रुतम् ।
तत्र स्नानेन दानेन विष्णुलोके महीयते ॥ ५२ ॥
वाग्जवैष्णवशाकल्यपरशुप्रभवाणि हि ।
बहून्यभूवंस्तीर्थानि तस्मिन्वै श्वेतपर्वते ॥ ५३ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये श्वेतपर्वतस्थशाकल्यादितीर्थवर्णनं नाम त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥
गौतमीमाहात्म्ये चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

---

# अथ चतुःषष्ट्यधिकशततमोऽध्यायः ।

## चिच्चिकतीर्थवर्णनम्

ब्रह्मोवाच ।

चिच्चिका (क)तीर्थमित्युक्तं सर्वरोगविनाशनम् ।
सर्वचिन्ताप्रहरणं सर्वशान्तिकरं नृणाम् ॥ १ ॥
तस्य स्वरूपं वक्ष्यामि शुभ्रे तस्मिन्नगोत्तमे ।
गङ्गाया उत्तरे पारे यत्र देवो गदाधरः ॥ २ ॥
चिच्चिकः पक्षिराट् तत्र भेरुण्डो योऽभिधीयते ।
सदा वसति तत्रैव मांसाशी श्वेतपर्वते ॥ ३ ॥
नानापुष्पफलाकीर्णैः सर्वर्तुकुसुमैर्नगैः ।
सेविते द्विजमुख्यैश्च गौतम्या चोपशोभिते ॥ ४ ॥
सिद्धचारणगन्धर्वकिंनरामरसंकुले ।
तत्समीपे नगः कश्चिद्द्विपदां च चतुष्पदाम् ॥ ५ ॥
रोगार्तिक्षुत्तृषाचिन्तामरणानां न भाजनम् ।
एवं गुणान्विते शैले नानामुनिगणावृते ॥ ६ ॥
पूर्वदेशाधिपः कश्चित्पवमान इति श्रुतः ।
क्षत्रधर्मरतः श्रीमान्देवब्राह्मणपालकः ॥ ७ ॥
बलेन महता युक्तः सपुरोधा वनं ययौ ।
रेमे स्त्रीभिर्मनोज्ञाभिर्नृत्यवादित्रजैः सुखैः ॥ ८ ॥
स च एवं धनुष्पाणिर्मृगयाशीलिभिर्वृतः ।
एवं भ्रमन्कदाचित्स श्रान्तो द्रुममुपागतः ॥ ९ ॥

गौतमीतीरसंभूतं नानापक्षिगणैर्वृतम् ।
आश्रमाणां गृहपतिं धर्मज्ञमिव सेवितम् ॥ १० ॥
तमाश्रित्य नगश्रेष्ठं पवमानो नृपोत्तमः ।
स विश्रान्तो जनवृत ईक्षां चक्रे नगोत्तमम् ॥ ११ ॥
तत्रापश्यद्द्विजं स्थूलं द्विमुखं शोभनाकृतिम् ।
चिन्ताविष्टं तथा श्रान्तं तमपृच्छन्नृपोत्तमः ॥ १२ ॥

राजोवाच ।

को भवान्द्विमुखः पक्षी चिन्तावानिव लक्ष्यसे ।
नैवात्र कश्चिद्दुःखार्तः कस्मात्वं दुःखमागतः ॥ १३ ॥

ब्रह्मोवाच ।

ततः प्रोवाच नृपतिं पवमानं शनैः शनैः ।
समाश्वस्तमनाः पक्षी चिच्चिको निःश्वसन्मुहुः ॥ १४ ॥

चिच्चिक उवाच ।

मत्तो भयं न चान्येषां मम वाऽन्योपपादितम् ।
नानापुष्पफलाकीर्णं मुनिभिः परिसेवितम् ॥ १५ ॥
पश्येयं शून्यमेवाद्रिं ततः शोचामि मामहम् ।
न लभामि सुखं किंचिन्न तृप्यामि कदाचन ॥
निद्रां प्राप्नोमि न क्वापि न विश्रान्तिं न निर्वृतिम् ॥ १६ ॥

ब्रह्मोवाच ।

द्विमुखस्य द्विजस्योक्तं श्रुत्वा राजाऽतिविस्मितः ॥ १७ ॥

राजोवाच ।

को भवान्किं कृतं पापं कस्माच्छून्यश्च पर्वतः ।
एकेनाऽऽस्येन तृप्यन्ति प्राणिनोऽत्र नगोत्तमे ॥ १८ ॥

किमुताऽऽस्यद्वयेन त्वं न तृप्तिमुपयास्यसि ।
किंवा ते दुष्कृतं प्राप्तमिह जन्मन्यथो पुरा ॥ १९ ॥
तत्सर्वं शंस मे सत्यं त्रास्ये त्वां महतो भयात् ॥ २० ॥

ब्रह्मोवाच ।

राजानं तं द्विजः प्राह निःश्वसन्नथ चिच्चिकः ॥ २१ ॥

चिच्चिक उवाच ।

वक्ष्येऽहं त्वां पूर्ववृत्तं पवमान शृणुष्व तत् ।
अहं द्विजातिप्रवरो वेदवेदाङ्गपारगः ॥ २२ ॥
कुलीनो विदितप्राज्ञः कार्यहन्ता कलिप्रियः ।
वदे पुरस्तथा पृष्ठे अन्यदन्यच्च जन्तुषु ॥ २३ ॥
परवृद्ध्या सदा दुःखी मायया विश्ववञ्चकः ।
कृतघ्नः सत्यरहितः परनिन्दाविचक्षणः ॥ २४ ॥
मित्रस्वामिगुरुद्रोही दम्भाचारोऽतिनिर्घृणः ।
मनसा कर्मणा वाचा तापयामि जनान्बहून् ॥ २५ ॥
अयमेव विनोदो मे सदा यत्परहिंसनम् ।
युग्मभेदं गणोच्छेदं मर्यादाभेदनं सदा ॥ २६ ॥
करोमि निर्विचारोऽहं विद्वत्सेवापराङ्मुखः ।
न मया सदृशः कश्चित्पातकी भुवनत्रये ॥ २७ ॥
तेनाहं द्विमुखो जातस्तापनाद्दुःखभाग्यहम् ।
तस्माद्दुःखेन संतप्तः शून्योऽयं पर्वतो मम ॥ २८ ॥
अन्यच्च शृणु भूपाल वाक्यं धर्मार्थसंहितम् ।
ब्रह्महत्यासमं पापं तद्विना तदवाप्यते ॥ २९ ॥

क्षत्रियः संगरं गत्वा अथवाऽन्यत्र संगरात् ।
पलायन्तं न्यस्तशस्त्रं विश्वस्तं च पराङ्मुखम् ॥ ३० ॥
अविज्ञातं चोपविष्टं बिभेमीति च वादिनम् ।
तं यदि क्षत्रियो हन्यात्स तु स्याद्ब्रह्मघातकः ॥ ३१ ॥
अधीतं विस्मरति यस्त्वं करोति तथोत्तमम् ।
अनादरं च गुरुषु तमाहुर्ब्रह्मघातकम् ॥ ३२ ॥
प्रत्यक्षे च प्रियं वक्ति परोक्षे परुषाणि च ।
अन्यद्धृदि वचस्यन्यत्करोत्यन्यत्सदैव यः ॥ ३३ ॥
गुरूणां शपथं कर्ता द्वेष्टा ब्राह्मणनिन्दकः ।
मिथ्या विनीतः पापात्मा स तु स्याद्ब्रह्मघातकः ॥ ३४ ॥
देवं वेदमथाध्यात्मं धर्मब्राह्मणसंगतिम् ।
एतान्निन्दति यो द्वेषात्स तु स्याद्ब्रह्मघातकः ॥ ३५ ॥
एवं भूतोऽप्यहं राजन्दम्भार्थं लज्जया तथा ।
सद्वृत्त इव वर्तेऽहं तस्माद्राजन्द्विजोऽभवम् ॥ ३६ ॥
एवं भूतोऽपि सत्कर्म किंचित्कर्ताऽस्मि कुत्रचित् ।
तेनाहं कर्मणा राजन्स्वतः स्मर्ता पुरा कृतम् ॥ ३७ ॥

ब्रह्मोवाच ।

तच्चिच्चिकवचः श्रुत्वा पवमानः सुविस्मितः ।
कर्मणा केन ते मुक्तिरित्याह नृपतिर्द्विजम् ॥ ३८ ॥
इति तस्य वचः श्रुत्वा नृपतिं प्राह पक्षिराट् ॥ ३९ ॥

चिच्चिक उवाच ।

अस्मिन्नेव नगश्रेष्ठे गौतम्या उत्तरे तटे ।
गदाधरं नाम तीर्थं तत्र मां नय सुव्रत ॥ ४० ॥

तद्धि तीर्थं पुण्यतमं सर्वपापप्रणाशनम् ।
सर्वकामप्रदं चेति महद्भिर्मुनिभिः श्रुतम् ॥ ४१ ॥
न गौतम्यास्तथा विष्णोरपरं क्लेशनाशनम् ।
सर्वभावेन तत्तीर्थं पश्येयमिति मे मतिः ॥ ४२ ॥
मत्कृतेन प्रयत्नेन नैतच्छक्यं कदाचन ।
कथमाकाङ्क्षितप्राप्तिर्भवेद्दुष्कृतकर्मणाम् ॥ ४३ ॥
सप्रयत्नोऽप्यहं वीर न पश्येऽतत्सुदुष्करम् ।
तस्मात्तव प्रसादाच्च पश्येयं हिःगदाधरम् ॥ ४४ ॥
अविज्ञापितदुःखज्ञं करुणावरुणालयम् ।
यस्मिन्दृष्टे भवक्लेशा न दृश्यन्ते पुनर्नरैः ॥ ४५ ॥
दृष्ट्वैव तं दिवं यास्ये प्रसादात्तव सुव्रत ॥ ४६ ॥

ब्रह्मोवाच ।

एवमुक्तः स नृपतिश्चिच्चिकेन द्विजन्मना ।
दर्शयामास तं देवं तां च गङ्गां द्विजन्मने ॥ ४७ ॥
तत स चिच्चिकः स्नात्वा(प्राह) गङ्गां त्रैलोक्यपावनीम् ॥४८॥

चिच्चिक उवाच ।

गङ्गे गौतमि यावत्त्वां त्रिजगत्पावनीं नरः ।
न पश्यत्युच्यते तावदिहामुत्रापि पातकी ॥ ४९ ॥
तस्मात्सर्वागसमपि मामुद्धर सरिद्वरे ।
संसारे देहिनामन्या न गतिः काऽपि कुत्रचित् ॥
त्वां विना विष्णुचरणसरोरुहसमुद्भवे ॥ ५० ॥

ब्रह्मोवाच ।

इति श्रद्धाविशुद्धात्मा गङ्गैकशरणो द्विजः ।
स्नानं चक्रे स्मरन्नन्तर्गङ्गे त्रायस्व मामिति ॥ ५१ ॥
गदाधरं ततो नत्वा पश्यत्सु नगवासिषु ।
पवमानाभ्यनुज्ञातस्तदैव दिवमाक्रमत् ॥ ५२ ॥
पवमानः स्वनगरं प्रययौ सानुगस्ततः ।
ततः प्रभृति तत्तीर्थं पावमानं सचिच्चिकम् ॥ ५३ ॥
गदाधरं कोटितीर्थमिति वेदविदो विदुः ।
कोटिकोटिगुणं कर्म कृतं तत्र भवेन्नृणाम् ॥ ५४ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये पावमानचिच्चिक-
गदाधरकोटितीर्थवर्णनं नाम चतुःषष्ट्यधिक-
शततमोऽध्यायः ॥ १६४ ॥
गौतमीमाहात्म्ये पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

## अथ पञ्चषष्ट्यधिकशततमोऽध्यायः ।

### भद्रतीर्थवर्णनम्

ब्रह्मोवाच ।

भद्रतीर्थमिति प्रोक्तं सर्वानिष्टनिवारणम् ।
सर्वपापप्रशमनं महाशान्तिप्रदायकम् ॥ १ ॥
आदित्यस्य प्रिया भार्या उषा त्वाष्ट्री पतिव्रता ।
छायाऽपि भार्या सवितुस्तस्याः पुत्रः शनैश्चरः ॥ २ ॥

तस्य स्वसा विष्टिरिति भीषणा पापरूपिणी ।
तां कन्यां सविता कस्मै ददामीति मतिं दधे ॥ ३ ॥
यस्मै यस्मै दातुकामः सूर्यो लोकगुरुः प्रभुः ।
तच्छ्रुत्वा भीषणा चेति किं कुर्मो भार्ययाऽनया ॥ ४ ॥
एवं तु वर्तमाने सा पितरं प्राह दुःखिता ॥ ५ ॥

विष्टिरुवाच ।

बालामेव पिता यस्तु दद्यात्कन्यां सुरूपिणे ।
स कृतार्थो भवेल्लोके न चेद्दुष्कृतवान्पिता ॥ ६ ॥
चतुर्थाद्वत्सराद्दूर्ध्वं यावन्न दशमात्ययः ।
तावद्विवाहः कन्यायाः पित्रा कार्यः प्रयत्नतः ॥ ७ ॥
श्रीमते विदुषे यूने कुलीनाय यशस्विने ।
उदाराय सनाथाय कन्या देया वराय वै ॥ ८ ॥
एतच्चेदन्यथा कुर्यात्पिता स निरयी सदा ।
धर्मस्य साधनं कन्या विदुषामपि भास्कर ॥ ९ ॥
नरकस्येव मूर्खाणां कामोपहतचेतसाम् ।
एकतः पृथिवी कृत्स्ना सशैलवनकानना ॥ १० ॥
स्वलंकृतोपाधिहीना सुकन्या चैकतः स्मृता ।
विक्रीणीते यश्च कन्यामश्वं वा गां तिलानपि ॥ ११ ॥
न तस्य रौरवादिभ्यः कदाचिन्निष्कृतिर्भवेत् ।
विवाहातिक्रमः कार्यो न कन्यायाः कदाचन ॥ १२ ॥
तस्मिन्कृते यत्पितुः स्यात्पापं तत्केन कथ्यते ।
यावल्लज्जां न जानाति यावत्क्रीडति पांशुभिः ॥ १३ ॥

तावत्कन्या प्रदातव्या नो चेत्पित्रोरधोगतिः ।
पितुः स्वरूपं पुत्रः स्याद्यः पिता पुत्र एव सः ॥ १४ ॥
आत्मनः सुखितां लोके का न कुर्यात्करोति च ।
यत्कन्यायां पिता कुर्याद्दानं पूजनमीक्षणम् ॥ १५ ॥
यत्कृतं तत्कृतं विद्यात्तासु दत्तं तदक्षयम् ।
यद्दत्तं तासु कन्यासु तदानन्त्याय कल्पते ॥ १६ ॥
पुत्रेषु चैव पौत्रेषु को न कुर्यात्सुखं रवे ।
करोति यः कन्यकानां स संपद्भाजनं भवेत् ॥ १७ ॥

ब्रह्मोवाच ।

एवं तां वादिनीं कन्यां विष्टिं प्रोवाच भास्करः १८ ॥

सूर्य उवाच ।

किं करोमि न गृह्णाति त्वां कश्चिद्भीषणाकृतिम् ।
कुलं रूपं वयो वित्तं विद्यां वृत्तं सुशीलताम् ॥ १९ ॥
मिथः पश्यन्ति संबन्धे विवाहे स्त्रीषु पुंसु च ।
अस्मासु सर्वमप्यस्ति विना तव गुणैः शुभे ॥
किं करोमि क्व दास्यामि वृथा मां धिक्करोषि किम् ॥ २० ॥

ब्रह्मोवाच ।

एवमुक्त्वा पुनस्तां च विष्टिं प्रोवाच भास्करः ॥ २१ ॥

सूर्य उवाच ।

यस्मै कस्मै च दातव्या त्वं वै यद्यनुमन्यसे ।
दीयसेऽद्य मया विष्टे अनुजानीहि मां ततः ॥ २२ ॥

ब्रह्मोवाच ।

पितरं प्राह सा विष्टिर्भर्ता पुत्रा धनं सुखम् ।
आयू रूपं च संप्रीतिर्जायते प्राक्तनानुगम् ॥ २३ ॥
यत्पुरा विहितं कर्म प्राणिना साध्वसाधु वा ।
फलं तदनुरोधेन प्राप्यतेऽपि भवान्तरे ॥ २४ ॥
स्वदोष एव तत्पित्रा परिहर्तव्य आदरात् ।
तादृगेव फलं तु स्याद्यादृगाचरितं पुरा ॥ २५ ॥
तस्मात्तद्दानसंबन्धं स्ववंशानुगतं पिता ।
करोति शेषं दैवेन यद्भाव्यं तद्भविष्यति ॥ २६ ॥

ब्रह्मोवाच ।

तच्छ्रुत्वा दुहितुर्वाक्यं त्वष्टुः पुत्राय भीषणाम् ।
विश्वरूपाय तां प्रादाद्विष्टिं लोकभयंकरीम् ॥ २७ ॥
विश्वरूपोऽपि तद्वच्च भीषणो भीषणाकृतिः ।
एवं मिथः संचरतोः शीलरूपसमानयोः ॥ २८ ॥
प्रीतिः कदाचिद्वैषम्यं दंपत्योरभवन्मिथः ।
गण्डो नामाभवत्पुत्रो ह्यतिगण्डस्तथैव च ॥ २९ ॥
रक्ताक्षः क्रोधनश्चैव व्ययो दुर्मुख एव च ।
तेभ्यः कनीयानभवद्धर्षणो नाम पुण्यभाक् ॥ ३० ॥
सुतः सुशीलः सुभगः शान्तः शुद्धमतिः शुचिः ।
स कदाचिद्यमगृहं द्रष्टुं मातुलमभ्यगात् ॥ ३१ ॥
स ददर्श बहूञ्जन्तून्स्वर्गस्थानिव दुःखिनः ।
स मातुलं तु पप्रच्छ नत्वा धर्मं सनातनम् ॥ ३२ ॥

हर्षण उवाच ।

क इमे सुखिनस्तात पच्यन्ते नरके च के ॥ ३३ ॥

ब्रह्मोवाच ।

एवं पृष्टो धर्मराजः सर्वं प्राह यथार्थवत् ।
तत्कर्मणां गतिं सर्वामशेषेण न्यवेदयत् ॥ ३४ ॥

यम उवाच ।

विहितस्य न कुर्वन्ति ये कदाचिदतिक्रमम् ।
न ते पश्यन्ति निरयं कदाचिदपि मानवाः ॥ ३५ ॥
न मानयन्ति ये शास्त्रं नाऽऽचारं न बहुश्रुतान् ।
विहितातिक्रमं कुर्युर्ये ते नरकगामिनः ॥ ३६ ॥

ब्रह्मोवाच ।

स तु श्रुत्वा धर्मवाक्यं हर्षणः पुनरब्रवीत् ॥ ३७ ॥

हर्षण उवाच ।

पिता त्वाष्ट्रो भीषणश्च माता विष्टिश्च भीषणा ।
भ्रातरश्च महात्मानो येन ते शान्तबुद्धयः ॥ ३८ ॥
सुरूपाश्च भविष्यन्ति निर्दोषा मङ्गलप्रदाः ।
तन्मे कर्म वदस्वाद्य तत्कर्ताऽस्मि सुरोत्तम ॥ ३९ ॥
अन्यथा तात्र गच्छेयमित्युक्तः प्राह धर्मराट् ।
हर्षणं शुद्धबुद्धिं तं हर्षणोऽसि न संशयः ॥ ४० ॥
बहवः स्युः सुताः केचिन्नैव ते कुलतन्तवः ।
एक एव सुतः कश्चिद्येन तद्ध्रियते कुलम् ॥ ४१ ॥

कुलस्याऽऽधारभूतो यो यः पित्रोः प्रियकारकः ।
यः पूर्वजानुद्धरति स पुत्रस्त्वितरो गदः ॥ ४२ ॥
यस्मात्त्वयाऽनुरूपं मे प्रोक्तं मातामह प्रियम् ।
तस्मात्त्वं गौतमीं गच्छ स्नात्वा नियतमानसः ॥ ४३ ॥
स्तुहि विष्णुं जगद्योनिं शान्तं प्रीतेन चेतसा ।
स तु प्रीतो यदि भवेत्सर्वमिष्टं प्रदास्यति ॥ ४४ ॥

ब्रह्मोवाच ।

इति श्रुत्वा धर्मवाक्यं हर्षणो गौतमीं ययौ ।
शुचिस्तुष्टाव देवेशं हरिं प्रीतोऽभवद्धरिः ॥ ४५ ॥
हर्षणाय ततः प्रादात्कुलभद्रं ततस्तु सः ।
सर्वाभद्रप्रशमनपूर्वकं भद्रमस्तु ते ॥ ४६ ॥
तद्भद्रा प्रोच्यते विष्टिः पिता भद्रस्तथा सुताः ।
ततः प्रभृति तत्तीर्थं भद्रतीर्थं तदुच्यते ॥ ४७ ॥
सर्वमङ्गलदं पुंसां तत्र भद्रपतिर्हरिः ।
तत्तीर्थसेविनां पुंसां सर्वसिद्धिप्रदायकम् ॥
मङ्गलैकनिधिः साक्षाद्देवदेवो जनार्दनः ॥ ४८ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये भद्रतीर्थवर्णनं-
नाम पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥
गौतमीमाहात्म्ये षण्णवतितमोऽध्यायः ॥ ९६ ॥

— —

# अथ षट्षष्ट्यधिकशततमोऽध्यायः ।

## पतत्रितीर्थवर्णनम्

ब्रह्मोवाच ।

पतत्रितीर्थमाख्यातं रोगघ्नं पापनाशनम् ।
तस्य श्रवणमात्रेण कृतकृत्यो भवेन्नरः ॥ १ ॥
बभूवतुः कश्यपस्य सुतावरुणवीश्वरौ ।
संपातिश्च जटायुश्च संभवेतां तदन्वये ॥ २ ॥
तार्क्ष्यप्रजापतेः पुत्रावरुणो गरुडस्तथा ।
तदन्वये च संभूतः संपातिः पतगोत्तमः ॥ ३ ॥
जटायुरिति विख्यातो ह्यपरः सोदरोऽनुजः ।
अन्योन्यस्पर्धया युक्तावुन्मत्तौ स्वबलेन तौ ॥ ४ ॥
संजग्मतुर्दिनकरं नमस्कर्तुं विहायसि ।
यावत्सूर्यस्य सामीप्यं प्राप्तौ तौ विहगोत्तमौ ॥ ५ ॥
दग्धपक्षावुभौ श्रान्तौ पतितौ गिरिमूर्धनि ।
बान्धवौ पतितौ दृष्ट्वा निश्चेष्टौ गतचेतसौ ॥ ६ ॥
तावद्दुःखाभिभूतोऽसावरुणः प्राह भास्करम् ।
तौ दृष्ट्वा त्वरुणः सूर्यं प्राहेदं पतितौ भुवि ॥
आश्वासयैतौ तिग्मांशो यावन्नैतौ मरिष्यतः ॥ ७ ॥

ब्रह्मोवाच ।

तथेत्युक्त्वा दिनकरो जीवयामास तौ खगौ ।
गरुडोऽपि तयोः श्रुत्वा अवस्थां सह विष्णुना ॥ ८ ॥

आगत्याऽऽश्वासयामास सुखं चक्रे च नारद।
सर्व एव तदा जग्मुर्गङ्गां तापापनुत्तये ॥ ९ ॥
जटायुश्चारुणश्चैव संपातिर्गरुडस्तथा।
सूर्यो विष्णुस्तत्प्रययौ तत्तीर्थं बहुपुण्यदम् ॥ १० ॥
पतत्रितीर्थमाख्यातं विषघ्नं सर्वकामदम्।
स्वयं सूर्यस्तथा विष्णुः सुपर्णेनारुणेन च ॥ ११ ॥
आसते गौतमीतीरे तथैव वृषभध्वजः।
त्रयाणामपि देवानां स्थितेस्तत्तीर्थमुत्तमम् ॥ १२ ॥
तत्र स्नात्वा शुचिर्भूत्वा नमस्कुर्यात्सुरानिमान्।
आधिव्याधिविनिर्मुक्तः स परं सौख्यमाप्नुयात् ॥ १३ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये पतत्रितीर्थवर्णनं नाम षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥
गौतमीमाहात्म्ये सप्तनवतितमोऽध्यायः ॥ ९७ ॥

---

## अथ सप्तषष्ट्यधिकशततमोऽध्यायः।

### विप्रतीर्थवर्णनम्

ब्रह्मोवाच।

विप्रतीर्थमिति ख्यातं तथा नारायणं विदुः।
तस्याऽऽख्यानं प्रवक्ष्यामि शृणु विस्मयकारकम् ॥ १ ॥
अन्तर्वेद्यां द्विजः कश्चिद्ब्राह्मणो वेदपारगः।
तस्य पुत्रा महाप्राज्ञा गुणरूपदयान्विताः ॥ २ ॥

तेषां कनीयान्यो भ्राता शान्तो गुणगणैर्वृतः ।
आसन्दिव इति ख्यातः सर्वज्ञानो महामतिः ॥ ३ ॥
विवाहाय पिता तस्मा आसन्दिवाय यत्नवान् ।
एतस्मिन्नन्तरे रात्रौ सुप्तं तं द्विजपुत्रकम् ॥ ४ ॥
अविष्णुस्मरणं सौम्यशिरस्कमसमाहितम् ।
आसान्दिवं क्रूररूपा राक्षसी कामरूपिणी ॥ ५ ॥
तमादायागमच्छीघ्रं गौतम्या दक्षिणे तटे ।
श्रीगिरेरुत्तरे पारे बहुब्राह्मणसेवितम् ॥ ६ ॥
नगरं धर्मनिलयं लक्ष्म्या निलयमेव च ।
तत्र राजा बृहत्कीर्तिः सर्वक्षत्रगुणान्वितः ॥ ७ ॥

तस्यामितक्षेमसुभिक्षयुक्तं,
निशावसाने द्विजपुत्रयुक्ता ।
सा राक्षसी तत्पुरमाससाद,
मनोज्ञरूपाणि बिभर्ति नित्यम् ॥ ८ ॥

सा कामरूपेण चरत्यशेषां,
महीमिमां तेन समं द्विजेन ।
गोदावरीदक्षिणतीरभागे,
वृद्धाकृतिस्तं द्विजमाह भीमा ॥ ९ ॥

राक्षस्युवाच ।

एषा तु गङ्गा द्विजमुख्य संध्या,
उपास्यतां विप्रवरैः समेत्य ।
यथोचितं विप्रवरास्तु काले,
नोपासते यत्नत एव संध्याम् ॥ १० ॥

नीचास्त एवाभिहिताः सुरेशै-
रन्त्यावसायिप्रवरास्त एते ।
अहं जनित्री तव चेति वाच्यं,
नो चेदिदानीं त्वमुपैषि नाशम् ॥ ११ ॥
मद्वाक्यकर्ताऽसि यदि द्विजेन्द्र,
सुखं करिष्ये तव यत्प्रियं च ।
पुनश्च देशं निलयं गुरूंश्च,
संप्रापयिष्ये ननु सत्यमेतत् ॥ १२ ॥

ब्रह्मोवाच ।

स प्राह का त्वं द्विजपुंगवोऽपि,
सोवाच तं राक्षसी कामरूपा ।
विश्वासयन्ती शपथैरनेकै-
स्तं भ्रान्तचित्तं मुनिराजपुत्रम् ॥ १३ ॥
कङ्कालिनी नाम जगत्प्रसिद्धा,
विप्रोऽसि तामाह निवेदितं यत् ।
तदेव कर्ताऽस्मि न संशयोऽत्र,
यत्तत्प्रियं वच्मि करोमि चैव ॥ १४ ॥

ब्रह्मोवाच ।

तद्विप्रवचनं श्रुत्वा राक्षसी कामरूपिणी ।
वृद्धा तथाऽपि चार्वङ्गी दिव्यालंकारभूषणा ॥ १५ ॥
द्विजमादाय सर्वत्र मत्सुतोऽयं गुणाकरः ।
एवं वदन्ती सर्वत्र याति वक्ति करोति च ॥ १६ ॥

तं विप्रं रूपसौभाग्यवयोविद्याविभूषितम् ।
तां च वृद्धां गुणोपेतामस्य मातेति मेनिरे ॥ १७ ॥
तत्र द्विजवरः कश्चित्स्वां कन्यां भूषणान्विताम् ।
राक्षसीं तां पुरस्कृत्य प्रादात्तस्मै द्विजातये ॥ १८ ॥
सा कन्या तं पतिं प्राप्य कृतार्थाऽस्मीत्यचिन्तयत् ।
स द्विजोऽपि गुणैर्युक्तां पत्नीं दृष्ट्वा सुदुःखितः ॥ १९ ॥

द्विज उवाच ।

मामियं भक्षयेदेव राक्षसी पापरूपिणी ।
किं करोमि क्व गच्छामि कस्यैतत्कथयामि वा ॥ २० ॥
महत्संकटमापन्नं रक्षयिष्यति कोऽत्र माम् ।
भार्या ममेयं कल्याणी गुणरूपवयोयुता ॥
एनामप्यशुभाऽकस्माद्भक्षयिष्यति राक्षसी ॥ २१ ॥

ब्रह्मोवाच ।

एतस्मिन्नन्तरे तत्र भार्या सा गुणशालिनी ।
वृद्धाऽप्यतिदुराधर्षा सा गता कुत्रचित्तदा ॥ २२ ॥
प्रश्रयावनता भूत्वा बाला चापि पतिव्रता ।
भर्तारं दुःखितं ज्ञात्वा पतिं प्राह रहः शनैः ॥ २३ ॥

भार्योवाच ।

कस्मात्ते दुःखमापन्नं स्वामिंस्तत्त्वं वदस्व मे ॥ २४ ॥

ब्रह्मोवाच ।

शनैः प्रोवाच तां भार्यां यथावत्पूर्वविस्तरम् ।
किमकथ्यं प्रिये मित्रे कुलीनायां च योषिति ॥ २५ ॥
भर्तृवाक्यं निशम्येदं प्रोवाच वदतां वरा ॥ २६ ॥

भार्योवाच ।

अनात्मनः सर्वतोऽपि भयमस्ति गृहेष्वपि ।
कुतो भयं ह्यात्मवतां किं पुनर्गौतमीतटे ॥ २७ ॥
वसतां विष्णुभक्तानां विरक्तानां विवेकिनाम् ।
अत्र स्नात्वा शुचिर्भूत्वा स्तुति देवमनामयम् ॥ २८ ॥

ब्रह्मोवाच ।

एतदाकर्ण्य गङ्गायां स्नात्वा विगतकल्मषः ।
तुष्टाव गौतमीतीरे द्विजो नारायणं तथा ॥ २९ ॥

द्विज उवाच ।

त्वमन्तरात्मा जगतोऽस्य नाथ,
त्वमेव कर्ताऽस्य मुकुन्द हर्ता ।
त्वं पालकः पालयसे न दीन-
मनाथबन्धो नरसिंह कस्मात् ॥ ३० ॥

श्रुत्वैतत्प्रार्थनं तस्य जगच्छोकनिवारणः ।
नारायणोऽपि तां पापां निजघान स राक्षसीम् ॥ ३१ ॥
सुदर्शनेन चक्रेण सहस्रारेण भास्वता ।
तस्मै प्रादाद्वरानिष्टान्प्रापयच्च गुरुं प्रभुः ॥ ३२ ॥
ततः प्रभृति तत्तीर्थं विप्रं नारायणं विदुः ।
स्नानदानेन पूजाद्यैर्यत्र सिध्यति वाञ्छितम् ॥ ३३ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये विप्रनारायणतीर्थ-
वर्णनं नाम सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥
गौतमीमाहात्म्येऽष्टनवतितमोऽध्यायः ॥ ९८ ॥

———

तं विप्रं रूपसौभाग्यवयोविद्याविभूषितम् ।
तां च वृद्धां गुणोपेतामस्य मातेति मेनिरे ॥ १७ ॥
तत्र द्विजवरः कश्चित्स्वां कन्यां भूषणान्विताम् ।
राक्षसीं तां पुरस्कृत्य प्रादात्तस्मै द्विजातये ॥ १८ ॥
सा कन्या तं पतिं प्राप्य कृतार्थाऽस्मीत्यचिन्तयत् ।
स द्विजोऽपि गुणैर्युक्तां पत्नीं दृष्ट्वा सुदुःखितः ॥ १६ ॥

द्विज उवाच ।

मामियं भक्षयेदेव राक्षसी पापरूपिणी ।
किं करोमि क्व गच्छामि कस्यैतत्कथयामि वा ॥ २० ॥
महत्संकटमापन्नं रक्षयिष्यति कोऽत्र माम् ।
भार्या ममेयं कल्याणी गुणरूपवयोयुता ॥
एनामप्यशुभाऽकस्माद्भक्षयिष्यति राक्षसी ॥ २१ ॥

ब्रह्मोवाच ।

एतस्मिन्नन्तरे तत्र भार्या सा गुणशालिनी ।
वृद्धाऽप्यतिदुराधर्षा सा गता कुत्रचित्तदा ॥ २२ ॥
प्रश्रयावनता भूत्वा बाला चापि पतिव्रता ।
भर्तारं दुःखितं ज्ञात्वा पतिं प्राह रहः शनैः ॥ २३ ॥

भार्योवाच ।

कस्मात्ते दुःखमापन्नं स्वामिंस्तत्त्वं वदस्व मे ॥ २४ ॥

ब्रह्मोवाच ।

शनैः प्रोवाच तां भार्यां यथावत्पूर्वविस्तरम् ।
किमकथ्यं प्रिये मित्रे कुलीनायां च योषिति ॥ २५ ॥
भर्तृवाक्यं निशम्येदं प्रोवाच वदतां वरा ॥ २६ ॥

भार्योवाच ।

अनात्मनः सर्वतोऽपि भयमस्ति गृहेष्वपि ।
कुतो भयं ह्यात्मवतां किं पुनर्गौतमीतटे ॥ २७ ॥
वसतां विष्णुभक्तानां विरक्तानां विवेकिनाम् ।
अत्र स्नात्वा शुचिर्भूत्वा स्तुति देवमनामयम् ॥ २८ ॥

ब्रह्मोवाच ।

एतदाकर्ण्य गङ्गायां स्नात्वा विगतकल्मषः ।
तुष्टाव गौतमीतीरे द्विजो नारायणं तथा ॥ २९ ॥

द्विज उवाच ।

त्वमन्तरात्मा जगतोऽस्य नाथ,
त्वमेव कर्ताऽस्य मुकुन्द हर्ता ।
त्वं पालकः पालयसे न दीन-
मनाथबन्धो नरसिंह कस्मात् ॥ ३० ॥

श्रुत्वैतत्प्रार्थनं तस्य जगच्छोकनिवारणः ।
नारायणोऽपि तां पापां निजघान स राक्षसीम् ॥ ३१ ॥
सुदर्शनेन चक्रेण सहस्रारेण भास्वता ।
तस्मै प्रादाद्वरानिष्टान्प्रापयच्च गुरुं प्रभुः ॥ ३२ ॥
ततः प्रभृति तत्तीर्थं विप्रं नारायणं विदुः ।
स्नानदानेन पूजाद्यैर्यत्र सिध्यति वाञ्छितम् ॥ ३३ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये विप्रनारायणतीर्थ-
वर्णनं नाम सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥
गौतमीमाहात्म्येऽष्टनवतितमोऽध्यायः ॥ ९८ ॥

——

# अथाष्टषष्ट्यधिकशततमोऽध्यायः ।

## भानुतीर्थवर्णनम्

ब्रह्मोवाच ।

भानुतीर्थमिति ख्यातं त्वाष्ट्रं माहेश्वरं तथा ।
ऐन्द्रं याम्यं तथाऽऽग्नेयं सर्वपापप्रणाशनम् ॥ १ ॥
अभिष्टुत इति ख्यातो राजाऽऽसीत्प्रियदर्शनः ।
हयमेधेन पुण्येन यष्टुमारब्धवान्सुरान् ॥ २ ॥
तत्रर्त्विजः षोडश स्युर्वसिष्ठात्रिपुरोगमाः ।
क्षत्रिये यजमाने तु यज्ञभूमिः कथं भवेत् ॥ ३ ॥
ब्राह्मणे दीक्षिते राजा भुवं दास्यति यज्ञियाम् ।
भूपतौ दीक्षिते दाता को भवेत्को नु याचते ॥ ४ ॥
याच्ञेयमखिलाशर्मजननी पापरूपिणी ।
केनाप्यतो न कार्यैव क्षत्रियेण विशेषतः ॥ ५ ॥
एवं मीमांसमानेषु ब्राह्मणेषु परस्परम् ।
तत्र प्राह महाप्राज्ञो वसिष्ठो धर्मवित्तमः ॥ ६ ॥

वसिष्ठ उवाच ।

राज्ञि दीक्षायमाणे तु सूर्यो याच्यो भुवं प्रति ।
देहि मे देव सवितर्यजनं देवतोचितम् ॥ ७ ॥
दैवं क्षत्रमसि ब्रह्मन्भूतनाथ नमोऽस्तु ते ।
याचितः सविता राज्ञा देवानां यजनं शुभम् ॥ ८ ॥
ददात्येव ततो राजन्प्रार्थयेशं दिवाकरम् ॥ ९ ॥

ब्रह्मोवाच ।

तथेत्युक्त्वाऽभिष्टुतोऽपि देवदेवं दिवाकरम् ।
श्रद्धया प्रार्थयामास हरीशाजात्मकं रविम् ॥ १० ॥

राजोवाच ।

देवानां यजनं देहि सवितस्ते नमोऽस्तु ते ॥ ११ ॥

ब्रह्मोवाच ।

क्षत्रं दैवं यतः सूर्यो दत्त्वा भूर्भूपतेस्ततः ।
सविता देवदेवेशो ददामीत्यभ्यभाषत ॥ १२ ॥
एवं करोति यो यज्ञं तस्य रिष्टिर्न काचन ।
तथा वाजिमखे सत्रे ब्राह्मणैर्वेदपारगैः ॥ १३ ॥
प्रारब्धेऽभिष्टुता राज्ञा यत्रागाद्भूपतिं रविः ।
देवानां यजनं दातुं भानुतीर्थं तदुच्यते ॥ १४ ॥
तं देवक्रतुमुत्कृष्टं हयमेधं सुरैर्युतम् ।
दैत्याश्च दनुजाश्चैव तथाऽन्ये यज्ञघातकाः ॥ १५ ॥
ब्रह्मवेषधराः सर्वे गायन्तः सामगा इव ।
तेऽपि तत्र महाप्राज्ञाः प्राविशन्ननिवारिताः ॥ १६ ॥
चमसानि च पात्राणि सोमं चषालमेव च ।
सोमपानं हविस्त्यागमृत्विजो भूपतिं तथा ॥ १७ ॥
निन्दन्ति निक्षिपन्त्यन्ये हसन्त्यन्ये तथाऽसुराः ।
तेषां चेष्टां न जानन्ति विश्वरूपं विना मुने ॥ १८ ॥
विश्वरूपोऽपि पितरं प्राह दैत्या इमे इति ।
तत्पुत्रवचनं श्रुत्वा त्वष्टा प्राह सुरानिदम् ॥ १९ ॥

त्वष्टोवाच ।

गृहीत्वा वारिदर्भांश्च प्रोक्षयध्वं समन्ततः ।
ये निन्दति मखं पुण्यं चमसं सोममेव च ॥ २० ॥
मया त्वपहताः सर्व इत्युक्त्वा परिषिञ्चत ॥ २१ ॥

ब्रह्मोवाच ।

तथा चक्रुः सुरगणास्त्वष्टा चापि तथाऽकरोत् ।
भस्मीभूतास्ततः सर्वे कांदिशीकास्ततोऽभवन् ॥ २२ ॥
हता मया महापापा इत्युक्त्वा वार्यवाक्षिपत् ।
ततः क्षीणायुषो दैत्याः प्रातिष्ठन्कुपितास्ततः ॥ २३ ॥
यत्रैतत्प्राक्षिपद्वारि त्वष्टा लोकप्रजापतिः ।
त्वाष्ट्रं तीर्थं तदाख्यातं सर्वपापप्रणाशनम् ॥ २४ ॥
त्वष्टुर्वाक्याच्च्युतान्दैत्यान्निजघान यमस्तदा ।
कालदण्डेन चक्रेण कालपाशेन मन्युना ॥ २५ ॥
यत्र ते निहता दैत्यास्तत्तीर्थं याम्यमुच्यते ।
यत्राभवत्क्रतुः पूर्णो हुत्वाऽग्नौ चामृतं बहु ॥ २६ ॥
धाराभिः शरमानाभिरखण्डाभिर्महाध्वरे ।
यत्राभवद्धव्यवाहस्तृप्तस्तस्य ह्यभिष्टुतः ॥ २७ ॥
अग्नितीर्थं तदाख्यातमश्वमेधफलप्रदम् ।
इन्द्रो मरुद्भिर्नृपतिं प्राहेदं वचनं शुभम् ॥ २८ ॥
त्वं सम्राड्भविता राजन्नुभयोरपि लोकयोः ।
सखा मम प्रियो नित्यं भविता नात्र संशयः ॥ २९ ॥

स कृतार्थो मर्त्यलोक इन्द्रतीर्थे च तर्पणम् ।
कुर्यात्पितॄणां प्रीत्यर्थं यमतीर्थे विशेषतः ॥ ३० ॥
माहेश्वरं तु तत्तीर्थं पूजितोऽभिष्टुतः शिवः ।
भक्तियुक्तेन विप्रैश्च सर्वकर्मविशारदैः ॥ ३१ ॥
वैदिकैर्लौकिकैश्चैव मन्त्रैः पूज्यं महेश्वरम् ।
नृत्यैर्गीतैस्तथा वाद्यैरमृतैः पञ्चसंभवैः ॥ ३२ ॥
उपचारैश्च बहुभिर्दण्डपातप्रदक्षिणैः ।
धूपैर्दीपैश्च नैवेद्यैः पुष्पैर्गन्धैः सुगन्धिभिः ॥ ३३ ॥
पूजयामास देवेशं विष्णुं शंभुं धियैकया ।
ततः प्रसन्नौ देवेशौ वरान्ददतुरोजसा ॥ ३४ ॥
अभिष्टुते नरेन्द्राय भुक्तिमुक्ती उभे अपि ।
माहात्म्यमस्य तीर्थस्य तथा ददतुरुत्तमम् ॥ ३५ ॥
ततःप्रभृति तत्तीर्थं शैवं वैष्णवमुच्यते ।
तत्र स्नानं च दानं च सर्वकामप्रदं विदुः ॥ ३६ ॥
इमानि सर्वतीर्थानि स्मरेदपि पठेत वा ।
विमुक्तः सर्वपापेभ्यः शिवविष्णुपुरं व्रजेत् ॥ ३७ ॥
भानुतीर्थं विशेषेण स्नानं सर्वार्थसिद्धिदम् ।
तत्र तीर्थं महापुण्यं तीर्थानां शतमत्र हि ॥ ३८ ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये भान्वादिशततीर्थ-
वर्णनं नामाष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥
गौतमीमाहात्म्ये नवनवतितमोऽध्यायः ॥ ९९ ॥

——

# अथैकोनसप्तत्यधिकशततमोऽध्यायः ।

## भिल्लतीर्थवर्णनम्

ब्रह्मोवाच ।

भिल्लतीर्थमिति ख्यातं रोगघ्नं पापनाशनम् ।
महादेवपदाम्भोजयुगभक्तिप्रदायकम् ॥ १ ॥
तत्राप्येवंविधां पुण्यां कथां शृणु महामते ।
गङ्गाया दक्षिणे तीरे श्रीगिरेरुत्तरे तटे ॥ २ ॥
आदिकेश इति ख्यात ऋषिभिः परिपूजितः ।
महादेवो लिङ्गरूपी सदाऽऽस्ते सर्वकामदः ॥ ३ ॥
सिन्धुद्वीप इति ख्यातो मुनिः परमधार्मिकः ।
तस्य भ्राता वेद इति स चापि परमो ऋषिः ॥ ४ ॥
तमादिकेशं वै देवं त्रिपुरारिं त्रिलोचनम् ।
नित्यं पूजयते भक्त्या प्राप्ते मध्यंदिने रवौ ॥ ५ ॥
भिक्षाटनाय वेदोऽपि याति ग्रामं विचक्षणः ।
याते तस्मिन्द्विजवरे व्याधः परमधार्मिकः ॥ ६ ॥
तस्मिन्गिरिवरे पुण्ये मृगयां याति नित्यशः ।
अटित्वा विविधान्देशान्मृगान्हत्वा यथासुखम् ॥ ७ ॥
मुखे गृहीत्वा पानीयमभिषेकाय शूलिनः ।
न्यस्य मांसं धनुष्कोट्यां श्रान्तो व्याधः शिवं प्रभुम् ॥ ८ ॥
आदिकेशं समागत्य न्यस्य मांसं ततो बहिः ।
गङ्गां गत्वा मुखे वारि गृहीत्वाऽऽगत्य तं शिवम् ॥ ९ ॥

यस्य कस्यापि पत्राणि करेणाऽऽदाय भक्तितः ।
अपरेण च मांसानि नैवेद्यार्थं च तन्मनाः ॥ १० ॥
आदिकेशं समागत्य वेदेनार्चितमोजसा ।
पादेनाऽऽहत्य तां पूजां मुखानीतेन वारिणा ॥ ११ ॥
स्नापयित्वा शिवं देवमर्चयित्वा तु पत्रकैः ।
कल्पयित्वा तु(समर्पयति) तन्मांसं शिवो मे प्रीयतामिति १२
नैव किंचित्स जानाति शिवभक्तिं विना शुभाम् ।
ततो याति स्वकं स्थानं मांसेन तु यथागतम् ॥ १३ ॥
करोत्येतादृगागत्याऽऽगत्य प्रत्यहमेव सः ।
तथाऽपीशस्तुतोषास्य विचित्रा हीश्वरस्थितिः ॥ १४ ॥
यावन्नायात्यसौ भिल्लः शिवस्तावन्न सौख्यभाक् ।
भक्तानुकम्पितां शंभोर्मानातीतां तु वेत्ति कः ॥ १५ ॥
संपूजयत्यादिकेशमुमया प्रत्यहं शिवम् ।
एवं बहुतिथे काले याते वेदश्चुकोप ह ॥ १६ ॥
पूजां मन्त्रवतीं चित्रां शिवभक्तिसमन्विताम् ।
को नु विध्वंसते पापो मत्तः स वधमाप्नुयात् ॥ १७ ॥
गुरुदेवद्विजस्वामिद्रोही वध्यो मुनेरपि ।
सर्वस्यापि वधार्होऽसौ शिवस्य द्रोहकृन्नरः ॥ १८ ॥
एवं निश्चित्य मेधावी वेदः सिन्धोस्तथाऽनुजः ।
कस्येयं पापचेष्टा स्यात्पापिष्ठस्य दुरात्मनः ॥ १९ ॥
पुष्पैर्वन्यभवैर्दिव्यैः कन्दैर्मूलफलैः शुभैः ।
कृतां पूजां स विध्वस्य ह्यन्यां पूजां करोति यः ॥ २० ॥

सरांसि च मनोज्ञानि प्रसन्नसलिलानि च।
कुमुदैः पुण्डरीकैश्च तथा नीलोत्पलैः शुभैः ॥ ४० ॥
कह्लारैः कमलैश्चैव आचितानि समन्ततः।
कादम्बैश्चक्रवाकैश्च तथैव जलकुक्कुटैः ॥ ४१ ॥
कारण्डवैर्बकैर्हंसैः कूर्मैर्मद्गुभिरेव च।
एतैश्चान्यैश्च कीर्णानि समन्ताज्जलचारिभिः ॥ ४२ ॥
क्रमेणैव तथा सा तु वनं बभ्राम तैः सह।
एवं दृष्ट्वा वनं रम्यं तैः सार्धं परमाद्भुतम् ॥ ४३ ॥
विस्मतोत्फुल्लनयना सा बभूव वराङ्गना।
प्रोवाच वायुं कामं च वसन्तं च द्विजोत्तमाः ॥ ४४ ॥

प्रम्लोचोवाच।

कुरुध्वं मम साहाय्यं यूयं सर्वे पृथक्पृथक् ॥ ४५ ॥

ब्रह्मोवाच।

एवमुक्त्वा तदा सा तु तथेत्युक्ता सुरैर्द्विजाः।
प्रत्युवाचाद्य यास्यामि यत्रासौ संस्थितो मुनिः ॥ ४६ ॥
अद्य तं देहयन्तारं प्रयुक्तेन्द्रियवाजिनम्।
स्मरशस्त्रगलद्रश्मिं करिष्यामि कुसारथिम् ॥ ४७ ॥
ब्रह्मा जनार्दनो वाऽपि यदि वा नीललोहितः।
तथाऽऽप्यद्य करिष्यामि कामबाणक्षतान्तरम् ॥ ४८ ॥
इत्युक्त्वा प्रययौ साऽथ यत्रासौ तिष्ठते मुनिः।
मुनेस्तपः प्रभावेन प्रशान्तश्वापदाश्रमम् ॥ ४९ ॥

सा पुंस्कोकिलमाधुर्ये नदीतीरे व्यवस्थिता।
स्तोकमात्रं स्थिता तस्मादगायत वराऽप्सराः॥ ५० ॥
ततो वसन्तः सहसा बलं समकरोत्तदा।
कोकिलारावमधुरमकालिकमनोहरम्॥ ५१ ॥
ववौ गन्धवहश्चैव मलयाद्रिनिकेतनः।
पुष्पानुच्चावचान्मेध्यान्पातयंश्च शनैः शनैः॥ ५२ ॥
पुष्पबाणधरश्चैव गत्वा तस्य समीपतः।
मुनेश्च क्षोभयामास कामस्तस्यापि मानसम्॥ ५३ ॥
ततो गीतध्वनिं श्रुत्वा मुनिर्विस्मितमानसः।
जगाम यत्र सा सुभ्रूः कामबाणप्रपीडितः॥ ५४ ॥
दृष्ट्वा तामाह संहृष्टो विस्मयोत्फुल्ललोचनः।
भ्रष्टोत्तरीयो विकलः पुलकाञ्चितविग्रहः॥ ५५ ॥

ऋषिरुवाच।

काऽसि कस्यासि सुश्रोणि सुभगे चारुहासिनि।
मनो हरसि मे सुभ्रु ब्रूहि सत्यं सुमध्यमे॥ ५६ ॥

प्रम्लोचोवाच।

तव कर्मकरा चाहं पुष्पार्थमहमागता।
आदेशं देहि मे क्षिप्रं किं करोमि तवाऽऽज्ञया॥ ५७ ॥

व्यास उवाच।

श्रुत्वैवं वचनं तस्यास्त्यक्त्वा धैर्यं विमोहितः।
आदाय हस्ते तां बालां प्रविवेश स्वमाश्रमम्॥ ५८ ॥

ततः कामश्च वायुश्च वसन्तश्च द्विजोत्तमाः ।
जग्मुर्यथागतं सर्वे कृतकृत्यास्त्रिविष्टपम् ॥ ५९ ॥
शशंसुश्च हरिं गत्वा तस्यास्तस्य च चेष्टितम् ।
श्रुत्वा शक्रस्तदा देवाः प्रीताः सुमनसोऽभवन् ॥ ६० ॥
स च कण्डुस्तया सार्धं प्रविशन्नेव चाऽऽश्रमम् ।
आत्मनः परमं रूपं चकार मदनाकृति ॥ ६१ ॥
रूपयौवनसंपन्नमतीव सुमनोहरम् ।
दिव्यालंकारसंयुक्तं षोडशवत्सराकृति ॥ ६२ ॥
दिव्यवस्त्रधरं कान्तं दिव्यस्रग्गन्धभूषितम् ।
सर्वोपभोगसंपन्नं सहसा तपसो बलात् ॥ ६३ ॥
दृष्ट्वा सा तस्य तद्वीर्यं परं विस्मयमागता ।
अहोऽस्य तपसो वीर्यमित्युक्त्वा मुदिताऽभवत् ॥ ६४ ॥
स्नानं संध्यां जपं होमं स्वाध्यायं देवतार्चनम् ।
व्रतोपवासनियमं ध्यानं च मुनिसत्तमाः ॥ ६५ ॥
त्यक्त्वा स रेमे मुदितस्तया सार्धमहर्निशम् ।
मन्मथाविष्टहृदयो न बुबोध तपःक्षयम् ॥ ६६ ॥
संध्यारात्रिदिवापक्षमासर्त्वयनहायनम् ।
न बुबोध गतं कालं विषयासक्तमानसः ॥ ६७ ॥
सा च तं कामजैर्भावैर्विदग्धा रहसि द्विजाः ।
वरयामास सुश्रोणिः प्रलापकुशला तदा ॥ ६८ ॥
एवं कण्डुस्तया सार्धं वर्षाणामधिकं शतम् ।
अतिष्ठन्मन्दरद्रोण्यां ग्राम्यधर्मरतो मुनिः ॥ ६९ ॥

सा तं प्राह महाभागं गन्तुमिच्छाम्यहं दिवम् ।
प्रसादसुमुखो ब्रह्मन्ननुज्ञातुं त्वमर्हसि ॥ ७० ॥
तयैवमुक्तः स मुनिस्तस्यामासक्तमानसः ।
दिनानि कतिचिद्भद्रे स्थीयतामित्यभाषत ॥ ७१ ॥
एवमुक्ता ततस्तेन साग्रं वर्षशतं पुनः ।
बुभुजे विषयांस्तन्वी तेन सार्धं महात्मना ॥ ७२ ॥
अनुज्ञां देहि भगवन्व्रजामि त्रिदशालयम् ।
उक्तस्तयेति स पुनः स्थीयतामित्यभाषत ॥ ७३ ॥
पुनर्गते वर्षशते साधिके सा शुभानना ।
याम्यहं त्रिदिवं ब्रह्मन्प्रणयस्मितशोभनम् ॥ ७४ ॥
उक्तस्तयैवं स मुनिः पुनराहाऽऽयतेक्षणाम् ।
इहाऽऽस्यतां मया सुभ्रु चिरं कालं गमिष्यसि ॥ ७५ ॥
तच्छापभीता सुश्रोणी सह तेनर्षिणा पुनः ।
शतद्वयं किंचिदूनं वर्षाणां समतिष्ठत ॥ ७६ ॥
गमनाय महाभागो देवराजनिवेशनम् ।
प्रोक्तः प्रोक्तस्तया तन्व्या स्थीयतामित्यभाषत ॥ ७७ ॥
तस्य शापभयाद्भीरुर्दाक्षिण्येन च दक्षिणा ।
प्रोक्ता प्रणयभङ्गार्तिवेदिनी न जहौ मुनिम् ॥ ७८ ॥
तया च रमतस्तस्य परमर्षेरहर्निशम् ।
नवं नवमभूत्प्रेम मन्मथासक्तचेतसः ॥ ७९ ॥
एकदा तु त्वरायुक्तो निश्चक्रामोटजान्मुनिः ।
निष्क्रामन्तं च कुत्रेति गम्यते प्राह सा शुभा ॥ ८० ॥

इत्युक्तः स तया प्राह परिवृत्तमहः शुभे ।
संध्योपास्तिं करिष्यामि क्रियालोपोऽन्यथा भवेत् ॥ ८१ ॥
ततः प्रहस्य मुदिता सा तं प्राह महामुनिम् ।
किमद्य सर्वधर्मज्ञ परिवृत्तमहस्तव ॥
गतमेतन्न कुरुते विस्मयं कस्य कथ्यते ॥ ८२ ॥

मुनिरुवाच ।

प्रातस्त्वमागता भद्रे नदीतीरमिदं शुभम् ।
मया दृष्टाऽसि सुश्रोणि प्रविष्टा च ममाऽऽश्रमम् ॥ ८३ ॥
इयं च वर्तते संध्या परिणाममहो गतम् ।
अवहासः किमर्थोऽयं सद्भावः कथ्यतां मम ॥ ८४ ॥

प्रम्लोचोवाच ।

प्रत्यूषस्यागता ब्रह्मन्सत्यमेतन्न मे मृषा ।
किं त्वद्य तस्य कालस्य गतान्यब्दशतानि ते ॥ ८५ ॥
ततः ससाध्वसो विप्रस्तां पप्रच्छाऽऽयतेक्षणाम् ।
कथ्यतां भीरु कः कालस्त्वया मे रमतः सदा ॥ ८६ ॥

प्रम्लोचोवाच ।

सप्तोत्तराण्यतीतानि नववर्षशतानि च ।
मासाश्च षट्तथैवान्यत्समतीतं दिनत्रयम् ॥ ८७ ॥

ऋषिरुवाच ।

सत्यं भीरु वदस्येतत्परिहासोऽथवा शुभे ।
दिनमेकमहं मन्ये त्वया सार्धमिहोषितम् ॥ ८८ ॥

प्रम्लोचोवाच ।

वदिष्याम्यनृतं ब्रह्मन्कथमत्र तवान्तिके ।
विशेषादद्य भवता पृष्टा मार्गानुगामिना ॥ ८६ ॥

व्यास उवाच ।

निशम्य तद्वचस्तस्याः स मुनिर्द्विजसत्तमाः ।
धिग्धिङ्मामित्यनाचारं विनिन्द्याऽऽत्मानमात्मना ॥ ९० ॥

मुनिरुवाच ।

तपांसि मम नष्टानि हतं ब्रह्मविदां धनम् ।
हृतो विवेकः केनापि योषिन्मोहाय निर्मिता ॥ ९१ ॥
ऊर्मिषट्कातिगं ब्रह्म ज्ञेयमात्मजयेन मे ।
गतिरेषा कृता येन धिक्तं काममहाग्रहम् ॥ ९२ ॥
व्रतानि सर्ववेदाश्च कारणान्यखिलानि च ।
नरकग्राममार्गेण कामेनाद्य हतानि मे ॥ ९३ ॥
विनिन्द्येत्थं स धर्मज्ञः स्वयमात्मानमात्मना ।
तामप्सरसमासीनामिदं वचनमब्रवीत् ॥ ९४ ॥

ऋषिरुवाच ।

गच्छ पापे यथाकामं यत्कार्यं तत्त्वया कृतम् ।
देवराजस्य यत्क्षोभं कुर्वन्त्या भावचेष्टितैः ॥ ९५ ॥
न त्वां करोम्यहं भस्म क्रोधतीव्रेण वह्निना ।
सतां साप्तपदं मैत्र्यमुषितोऽहं त्वया सह ॥ ९६ ॥
अथवा तव दोषः कः किंवा कुर्यामहं तव ।
ममैव दोषो नितरां येनाहमजितेन्द्रियः ॥ ९७ ॥

यथा शक्रप्रियार्थिन्या कृतो मत्तपसो व्ययः ।
त्वया दृष्टिमहामोहमनुनाऽहं जुगुप्सितः ॥ ९८ ॥

व्यास उवाच ।

यावदित्थं स विप्रर्षिस्तां ब्रवीति सुमध्यमाम् ।
तावत्स्खलत्स्वेदजला सा बभूवातिवेपथुः ॥ ९९ ॥
प्रवेपमानां स च तां स्विन्नगात्रलतां सतीम् ।
गच्छ गच्छेति सक्रोधमुवाच मुनिसत्तमः ॥ १०० ॥
सा तु निर्भर्त्सिता तेन विनिष्क्रम्य तदाश्रमात् ।
आकाशगामिनी स्वेदं ममार्ज तरुपल्लवैः ॥ १०१ ॥
वृक्षाद्वृक्षं ययौ बाला उदग्रारुणपल्लवैः ।
निर्ममार्ज च गात्राणि गलत्स्वेदजलानि वै ॥ १०२ ॥
ऋषिणा यस्तदा गर्भस्तस्या देहे समाहितः ।
निर्जगाम सरोमाञ्चस्वेदरूपी तदङ्गतः ॥ १०३ ॥
तं वृक्षा जगृहुर्गर्भमेकं चक्रे च मारुतः ।
सोमेनाऽऽप्यायितो गोभिः स तदा ववृधे शनैः ॥ १०४ ॥
मारिषा नाम कन्याऽभूद्वृक्षाणां चारुलोचना ।
प्राचेतसानां सा भार्या दक्षस्य जननी द्विजाः ॥ १०५ ॥
स चापि भगवान्कण्डुः क्षीणे तपसि सत्तमः ।
पुरुषोत्तमाख्यं भो विप्रा विष्णोरायतनं ययौ ॥ १०६ ॥
ददर्श परमं क्षेत्रं मुक्तिदं भुवि दुर्लभम् ।
दक्षिणस्योदधेस्तीरे सर्वकामफलप्रदम् ॥ १०७ ॥

सुरम्यं वालुकाकीर्णं केतकीवनशोभितम् ।
नानाद्रुमलताकीर्णं नानापक्षिरुतं शिवम् ॥ १०८ ॥
सर्वत्र सुखसंचारं सर्वर्तुकुसुमान्वितम् ।
सर्वसौख्यप्रदं नृणां धन्यं सर्वगुणाकरम् ॥ १०९ ॥
भृग्वाद्यैः सेवितं पूर्वं मुनिसिद्धवरैस्तथा ।
गन्धर्वैः किंनरैर्यक्षैस्तथाऽन्यैर्मोक्षकाङ्क्षिभिः ॥ ११० ॥
ददर्श च हरिं तत्र देवैः सर्वैरलंकृतम् ।
ब्राह्मणाद्यैस्तथा वर्णैराश्रमस्थैर्निषेवितम् ॥ १११ ॥
दृष्ट्वैव स तदा क्षेत्रं देवं च पुरुषोत्तमम् ।
कृतकृत्यमिवाऽऽत्मानं मेने स मुनिसत्तमः ॥ ११२ ॥
तत्रैकाग्रमना भूत्वा चकाराऽऽराधनं हरेः ।
ब्रह्मपारमयं कुर्वञ्जपमेकाग्रमानसः ॥
ऊर्ध्वबाहुर्महायोगी स्थित्वाऽसौ मुनिसत्तमः ॥ ११३ ॥

मुनय ऊचुः ।

ब्रह्मपारं मुने श्रोतुमिच्छामः परमं शुभम् ।
जपता कण्डुना देवो येनाऽऽराध्यत केशव ॥ ११४ ॥

व्यास उवाच ।

पारं परं विष्णुरपारपारः,
परः परेभ्यः परमात्मरूपः ।
स ब्रह्मपारः परपारभूतः,
परः पराणामपि पारपारः ॥ ११५ ॥

स कारणं कारणसंश्रितोऽपि,
तस्यापि हेतुः परहेतुहेतुः ।
कार्योऽपि चैष सह कर्मकर्तृ········
रूपैरनेकैरवतीह सर्वम् ॥ ११६ ॥
ब्रह्म प्रभुर्ब्रह्म स सर्वभूतो,
ब्रह्म प्रजानां पतिरच्युतोऽसौ ।
ब्रह्माव्ययं नित्यमजं स विष्णु-
रपक्षयाद्यैरखिलैरसङ्गः ॥ ११७ ॥
ब्रह्माक्षरमजं नित्यं यथाऽसौ पुरुषोत्तमः ।
तथा रागादयो दोषाः प्रयान्तु प्रशमं मम ॥ ११८ ॥

व्यास उवाच ।

श्रुत्वा तस्य मुनेर्वाक्यं ब्रह्मपारं द्विजोत्तमाः ।
भक्तिं च परमां ज्ञात्वा सुदृढां पुरुषोत्तमः ॥ ११६ ॥
प्रीत्या स परया देवस्तदाऽसौ भक्तवत्सलः ।
गत्वा तस्य समीपं तु प्रोवाच मधुसूदनः ॥ १२० ॥
मेघगम्भीरया वाचा दिशः संनादयन्निव ।
आरुह्य गरुडं विप्रा विनताकुलनन्दनम् ॥ १२१ ॥

श्रीभगवानुवाच ।

मुने ब्रूहि परं कार्यं यत्ते मनसि वर्तते ।
वरदोऽहमनुप्राप्तो वरं वरय सुव्रत ॥ १२२ ॥
श्रुत्वैवं वचनं तस्य देवदेवस्य चक्रिणः ।
चक्षुरुन्मील्य सहसा ददर्श पुरतो हरिम् ॥ १२३ ॥

अतसीपुष्पसंकाशं पद्मपत्रायतेक्षणम् ।
शङ्खचक्रगदापाणिं मुकुटाङ्गदधारिणम् ॥ १२४ ॥
चतुर्बाहुमुदाराङ्गं पीतवस्त्रधरं शुभम् ।
श्रीवत्सलक्ष्मसंयुक्तं वनमालाविभूषितम् ॥ १२५ ॥
सर्वलक्षणसंयुक्तं सर्वरत्नविभूषितम् ।
दिव्यचन्दनलिप्ताङ्गं दिव्यमाल्यविभूषितम् ॥ १२६ ॥
ततः स विस्मयाविष्टो रोमाञ्चिततनूरुहः ।
दण्डवत्प्रणिपत्योर्व्यां प्रणाममकरोत्तदा ॥ १२७ ॥
अद्य मे सफलं जन्म अद्य मे सफलं तपः ।
इत्युक्त्वा मुनिशार्दूलास्तं स्तोतुमुपचक्रमे ॥ १२८ ॥

कण्डुरुवाच ।

नारायण हरे कृष्ण श्रीवत्साङ्क जगत्पते ।
जगद्बीज जगद्धाम जगत्साक्षिन्नमोऽस्तु ते ॥ १२९ ॥
अव्यक्त जिष्णो प्रभव प्रधानपुरुषोत्तम ।
पुण्डरीकाक्ष गोविन्द लोकनाथ नमोऽस्तु ते ॥ १३० ॥
हिरण्यगर्भ श्रीनाथ पद्मनाथ सनातन ।
भूगर्भ ध्रुव ईशान हृषीकेश नमोऽस्तु ते ॥ १३१ ॥
अनाद्यन्तामृताजेय जय त्वं जयतां वर ।
अजिताखण्ड श्रीकृष्ण श्रीनिवास नमोऽस्तु ते ॥ १३२ ॥
पर्जन्यधर्मकर्ता च दुष्पार दुरधिष्ठित ।
दुःखार्तिनाशन हरे जलशायिन्नमोऽस्तु ते ॥ १३३ ॥

भूतपाव्यक्त भूतेश भूततत्त्वैरनाकुल।
भूताधिवास भूतात्मन्भूतगर्भ नमोऽस्तु ते॥ १३४॥
यज्ञयज्वन्यज्ञधर यज्ञधाताऽभयप्रद।
यज्ञगर्भ हिरण्याङ्ग पृश्निगर्भ नमोऽस्तु ते॥ १३५॥
क्षेत्रज्ञः क्षेत्रभृत्क्षेत्री क्षेत्रहा क्षेत्रकृद्वशी।
क्षेत्रात्मन्क्षेत्ररहित क्षेत्रस्रष्ट्रे नमोऽस्तु ते॥ १३६॥
गुणालय गुणावास गुणाश्रय गुणावह।
गुणभोक्तृ गुणाराम गुणत्यागिन्नमोऽस्तु ते॥ १३७॥
त्वं विष्णुस्त्वं हरिश्चक्री त्वं जिष्णुस्त्वं जनार्दनः।
त्वं भूतस्त्वं वषट्कारस्त्वं भव्यस्त्वं भवत्प्रभुः॥ १३८॥
त्वं भूतकृत्त्वमव्यक्तस्त्वं भवो भूतभृद्भवान्।
त्वं भूतभावनो देवस्त्वामाहुरजमीश्वरम्॥ १३९॥
त्वमनन्तः कृतज्ञस्त्वं प्रकृतिस्त्वं वृषाकपिः।
त्वं रुद्रस्त्वं दुराधर्षस्त्वममोघस्त्वमीश्वरः॥ १४०॥
त्वं विश्वकर्मा जिष्णुस्त्वं त्वं शंभुस्त्वं वृषाकृतिः।
त्वं शंकरस्त्वमुशना त्वं सत्यं त्वं तपो जनः॥ १४१॥
त्वं विश्वजेता त्वं शर्म त्वं शरण्यस्त्वमक्षरम्।
त्वं शंभुस्त्वं स्वयंभूश्च त्वं ज्येष्ठस्त्वं परायणः॥ १४२॥
त्वमादित्यस्त्वमोंकारस्त्वं प्राणस्त्वं तमिस्रहा।
त्वं पर्जन्यस्त्वं प्रथितस्त्वं वेधास्त्वं सुरेश्वरः॥ १४३।
त्वमृग्यजुः साम चैव त्वमात्मा संमतो भवान्।
त्वमग्निस्त्वं च पवनस्त्वमापो वसुधा भवान्॥ १४४॥

त्वं स्रष्टा त्वं तथा भोक्ता होता त्वं च हविः क्रतुः ।
त्वं प्रभुस्त्वं विभुः श्रेष्ठस्त्वं लोकपतिरच्युतः ॥ १४५ ॥
त्वं सर्वदर्शनः श्रीमांस्त्वं सर्वदमनोऽरिहा ।
त्वमहस्त्वं तथा रात्रिस्त्वामाहुर्वत्सरं बुधाः ॥ १४६ ॥
त्वं कालस्त्वं कला काष्ठा त्वं मुहूर्तः क्षणा लवाः ।
त्वं बालस्त्वं तथा वृद्धस्त्वं पुमान्स्त्री नपुंसकः ॥ १४७ ॥
त्वं विश्वयोनिस्त्वं चक्षुस्त्वं वेदाङ्गं त्वमव्ययः ।
त्वं वेदवेदस्त्वं धाता विधाता त्वं समाहितः ॥ १४८ ॥
त्वं जलनिधिरामूलं त्वं धाता त्वं पुनर्वसुः ।
त्वं वैद्यस्त्वं धृतात्मा च त्वमतीन्द्रियगोचरः ॥ १४६ ॥
त्वमग्रणीर्ग्रामणीस्त्वं त्वं सुपर्णस्त्वमादिमान् ।
त्वं संग्रहस्त्वं सुमहत्त्वं धृतात्मा त्वमच्युतः ॥ १५० ॥
त्वं यमस्त्वं च नियमस्त्वं प्रांशुस्त्वं चतुर्भुजः ।
त्वमेवान्नान्तरात्मा त्वं परमात्मा त्वमुच्यते ॥ १५१ ॥
त्वं गुरुस्त्वं गुरुतमस्त्वं वामस्त्वं प्रदक्षिणः ।
त्वं पिप्पलस्त्वमगमस्त्वं व्यक्तस्त्वं प्रजापतिः ॥ १५२ ॥
हिरण्यनाभस्त्वं देवस्त्वं शशी त्वं प्रजापतिः ।
अनिर्देश्यवपुस्त्वं वै त्वं यमस्त्वं सुरारिहा ॥ १५३ ॥
त्वं च संकर्षणो देवस्त्वं कर्ता त्वं सनातनः ।
त्वं वासुदेवोऽमेयात्मा त्वमेव गुणवर्जितः ॥ १५४ ॥
त्वं ज्येष्ठस्त्वं वरिष्ठस्त्वं त्वं सहिष्णुश्च माधवः ।
सहस्रशीर्षा त्वं देवस्त्वमव्यक्तः सहस्रदृक् ॥ १५५ ॥

सहस्रपादस्त्वं देवस्त्वं विराट्त्वं सुरप्रभुः ।
त्वमेव तिष्ठसे भूयो देवदेव दशाङ्गुलः ॥ १५६ ॥
यद्भूतं तत्त्वमेवोक्तः पुरुषः शक्र उत्तमः ।
यद्भाव्यं तत्त्वमीशानस्त्वमृतस्त्वं तथाऽमृतः ॥ १५७ ॥
त्वत्तो रोहत्ययं लोको महीयांस्त्वमनुत्तमः ।
त्वं ज्यायान्पुरुषस्त्वं च त्वं देव दशधा स्थितः ॥ १५८ ॥
विश्वभूतश्चतुर्भागो नवभागोऽमृतो दिवि ।
नवभागोऽन्तरिक्षस्थः पौरुषेयः सनातनः ॥ १५९ ॥
भागद्वयं च भूसंस्थं चतुर्भागोऽप्यभूदिह ।
त्वत्तो यज्ञाः संभवन्ति जगतो वृष्टिकारणम् ॥ १६० ॥
त्वत्तो विराट्समुत्पन्नो जगतो हृदि यः पुमान् ।
सोऽतिरिच्यत भूतेभ्यस्तेजसा यशसा श्रिया ॥ १६१ ॥
त्वत्तो सुराणामाहारः पृषदाज्यमजायत ।
ग्राम्यारण्याश्चौषधयस्त्वत्तः पशुमृगादयः ॥ १६२ ॥
ध्येयध्यानपरस्त्वं च कृतवानसि चौषधीः ।
त्वं देवदेव सप्तास्य कालाख्यो दीप्तविग्रहः ॥ १६३ ॥
जङ्गमाजङ्गमं सर्वं जगदेतच्चराचरम् ।
त्वत्तः सर्वमिदं जातं त्वयि सर्वं प्रतिष्ठितम् ॥ १६४ ॥
अनिरुद्धस्त्वं माधवस्त्वं प्रद्युम्नः सुरारिहा ।
देव सर्वसुरश्रेष्ठ सर्वलोकपरायण ॥ १६५ ॥
त्राहि मामरविन्दाक्ष नारायण नमोऽस्तु ते ।
नमस्ते भगवन्विष्णो नमस्ते पुरुषोत्तम ॥ १६६ ॥

नमस्ते सर्वलोकेश नमस्ते कमलालय ।
गुणालय नमस्तेऽस्तु नमस्तेऽस्तु गुणाकर ॥ १६७ ॥
वासुदेव नमस्तेऽस्तु नमस्तेऽस्तु सुरोत्तम ।
जनार्दन नमस्तेऽस्तु नमस्तेऽस्तु सनातन ॥ १६८ ॥
नमस्ते योगिनां गम्य योगावास नमोऽस्तु ते ।
गोपते श्रीपते विष्णो नमस्तेऽस्तु मरुत्पते ॥ १६९ ॥
जगत्पते जगत्सूते नमस्ते ज्ञानिनां पते ।
दिवस्पते नमस्तेऽस्तु नमस्तेऽस्तु महीपते ॥ १७० ॥
नमस्ते मधुहन्त्रे च नमस्ते पुष्करेक्षण ।
कैटभघ्न नमस्तेऽस्तु सुब्रह्मण्य नमोऽस्तु ते ॥ १७१ ॥
नमोऽस्तु ते महामीन श्रुतिपृष्ठधराच्युत ।
समुद्रसलिलक्षोभ पद्मजाह्लादकारिणे ॥ १७२ ॥
अश्वशीर्ष महाघोण महापुरुषविग्रह ।
मधुकैटभहन्त्रे च नमस्ते तुरगानन ॥ १७३ ॥
महाकमठभोगाय पृथिव्युद्धरणाय च ।
विधृताद्रिस्वरूपाय महाकूर्माय ते नमः ॥ १७४ ।
नमो महावराहाय पृथिव्युद्धारकारिणे ।
नमश्चाऽऽदिवराहाय विश्वरूपाय वेधसे ॥ १७५ ॥
नमोऽनन्ताय सूक्ष्माय मुख्याय च वराय च ।
परमाणुस्वरूपाय योगिगम्याय ते नमः ॥ १७६ ॥

तस्मै नमः कारणकारणाय,
योगीन्द्रवृत्तनिलयाय सुदुर्विदाय ।

क्षीरार्णवाश्रितमहाहिसुतल्पगाय,
तुभ्यं नमः कनकरत्नसुकुण्डलाय ॥ १७७ ॥

व्यास उवाच ।

इत्थं स्तुतस्तदा तेन प्रीतः प्रोवाच माधवः ।
क्षिप्रं ब्रूहि मुनिश्रेष्ठ मत्तो यदभिवाञ्छसि ॥ १७८ ॥

कण्डुरुवाच ।

संसारेऽस्मिञ्जगन्नाथ दुस्तरे लोमहर्षणे ।
अनित्ये दुःखबहुले कदलीदलसंनिभे ॥ १७९ ॥
निराश्रये निरालम्बे जलबुद्बुदचञ्चले ।
सर्वोपद्रवसंयुक्ते दुस्तरे चातिभैरवे ॥ १८० ॥
भ्रमामि सुचिरं कालं मायया मोहितस्तव ।
न चान्तमभिगच्छामि विषयासक्तमानसः ॥ १८१ ॥
त्वामहं चाद्य देवेश संसारभयपीडितः ।
गतोऽस्मि शरणं कृष्ण मामुद्धर भवार्णवात् ॥ १८२ ॥
गन्तुमिच्छामि परमं पदं यत्ते सनातनम् ।
प्रसादात्तव देवेश पुनरावृत्तिदुर्लभम् ॥ १८३ ॥

श्रीभगवानुवाच ।

भक्तोऽसि मे मुनिश्रेष्ठ ममाराधय नित्यशः ।
मत्प्रसादाद्ध्रुवं मोक्षं प्राप्स्यसि त्वं समीहितम् ॥ १८४ ॥
मद्भक्ताः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजातिजाः ।
प्राप्नुवन्ति परां सिद्धिं किं पुनस्त्वं द्विजोत्तम ॥ १८५ ॥

श्वपाकोऽपि च मद्भक्तः सम्यक्श्रद्धासमन्वितः ।
प्राप्नोत्यभिमतां सिद्धिमन्येषां तत्र का कथा ॥ १८६ ॥

व्यास उवाच ।

एवमुक्त्वा तु तं विप्राः स देवो भक्तवत्सलः ।
दुर्विज्ञेयगतिर्विष्णुस्तत्रैवान्तरधीयत ॥ १८७ ॥
गते तस्मिन्मुनिश्रेष्ठाः कण्डुः संहृष्टमानसः ।
सर्वान्कामान्परित्यज स्वस्थचित्तो भवत्पुनः ॥ १८८ ॥
सर्वेन्द्रियाणि संयम्य निर्ममो निरहंकृतिः ।
एकाग्रमानसः सम्यग्ध्यात्वा तं पुरुषोत्तमम् ॥ १८९ ॥
निर्लेपं निर्गुणं शान्तं सत्तामात्रव्यवस्थितम् ।
अवाप परमं मोक्षं सुराणामपि दुर्लभम् ॥ १९० ॥
यः पठेच्छृणुयाद्वाऽपि कथां कण्डोर्महात्मनः ।
विमुक्तः सर्वपापेभ्यः स्वर्गलोकं स गच्छति ॥ १९१ ॥
एवं मया मुनिश्रेष्ठाः कर्मभूमिरुदाहृता ।
मोक्षक्षेत्रं च परमं देवं च पुरुषोत्तमम् ॥ १९२ ॥

ये पश्यन्ति विभुं स्तुवन्ति वरदं-
ध्यायन्ति मुक्तिप्रदं ।
भक्त्या श्रीपुरुषोत्तमाख्यमजरं-
संसारदुःखापहम् ॥ १९३ ॥

ते भुक्त्वा मनुजेन्द्रभोगममलाः-
स्वर्गे च दिव्यं सुखं ।

पश्चाद्यान्ति समस्तदोषरहिताः-
स्थानं हरेरव्ययम् ॥ १६४ ॥

इति श्रीमहापुराणे आदिब्राह्मे स्वयंभुऋषिसंवादे कण्डोरुपा-
ख्याननिरूपणं नामाष्टसप्तत्यधिकशततमो-
ऽध्यायः ॥ १७८ ॥

---

# अथोनाशीत्यधिकशततमोऽध्यायः ।

## बादरायणंप्रतिश्रीकृष्णावतारविषयकोमुनीनांप्रश्नः

लोमहर्षण उवाच ।

व्यासस्य वचनं श्रुत्वा मुनयः संयतेन्द्रियाः ।
प्रीता बभूवुः संहृष्टा विस्मिताश्च पुनः पुनः ॥ १ ॥

मुनय ऊचुः ।

अहो भारतवर्षस्य त्वया संकीर्तिता गुणाः ।
तद्वच्छ्रीपुरुषाख्यस्य क्षेत्रस्य पुरुषोत्तम ॥ २ ॥
विस्मयो हि न चैकस्य श्रुत्वा माहात्म्यमुत्तमम् ।
पुरुषाख्यस्य क्षेत्रस्य प्रीतिश्च वदतां वर ॥ ३ ॥
चिरात्प्रभृति चास्माकं संशयो हृदि वर्तते ।
त्वदृते संशयस्यास्य च्छेत्ता नान्योऽस्ति भूतले ॥ ४ ॥
उत्पत्तिं बलदेवस्य कृष्णस्य च महीतले ।
भद्रायाश्चैव कार्त्स्न्येन पृच्छामस्त्वां महामुने ॥ ५ ॥

किमर्थं तौ समुत्पन्नौ कृष्णसंकर्षणावुभौ ।
वसुदेवसुतौ वीरौ स्थितौ नन्दगृहे मुने ॥ ६ ॥
निःसारे मृत्युलोकेऽस्मिन्दुःखप्रायेऽतिचञ्चले ।
जलबुद्बुदसंकाशे भैरवे लोमहर्षणे ॥ ७ ॥
विण्मूत्रपिच्छलं कष्टं संकटं दुःखदायकम् ।
कथं घोरतरं तेषां गर्भवासमरोचत ॥ ८ ॥
यानि कर्माणि चक्रुस्ते समुत्पन्ना महीतले ।
विस्तरेण मुने तानि ब्रूहि नो वदतां वर ॥ ९ ॥
समग्रं चरितं तेषामद्भुतं चातिमानुषम् ।
कथं स भगवान्देवः सुरेशः सुरसत्तमः ॥ १० ॥
वसुदेवकुले श्रीमान्वासुदेवत्वमागतः
अमरैश्चाऽऽवृतं पुण्यं पुण्यकृद्भिरलंकृतम् ॥ ११ ॥
देवलोकं किमुत्सृज्य मर्त्यलोक इहाऽऽगतः ।
देवमानुषयोर्नेता द्योर्भुवः प्रभवोऽव्ययः ॥ १२ ॥
किमर्थं दिव्यमात्मानं मानुषेषु न्ययोजयत् ।
यश्चक्रं वर्तयत्येको मानुषाणामनामयम् ॥ १३ ॥
स मानुष्ये कथं बुद्धिं चक्रे चक्रगदाधरः ।
गोपायनं यः कुरुते जगतः सार्वभौतिकम् ॥ १४ ॥
स कथं गां गतो विष्णुर्गोपत्वमकरोत्प्रभुः ।
महाभूतानि भूतात्मा यो दधार चकार च ॥ १५ ॥
श्रीगर्भः स कथं गर्भे स्त्रिया भूचरया धृतः ।
येन लोकान्क्रमैर्जित्वा त्रिभिर्वै त्रिदशेप्सया ॥ १६ ॥

स्थापिता जगतो मार्गास्त्रिवर्गाश्चाभवंस्त्रयः ।
योऽन्तकाले जगत्पीत्वा कृत्वा तोयमयं वपुः ॥ १७ ॥
लोकमेकार्णवं चक्रे दृश्यादृश्येन चाऽऽत्मना ।
यः पुराणः पुराणात्मा वाराहं रूपमास्थितः ॥ १८ ॥
विषाणाग्रेण वसुधामुज्जहारारिसूदनः ।
यः पुरा पुरुहूतार्थे त्रैलोक्यमिदमव्ययम् ॥ १९ ॥
ददौ जित्वा वसुमतीं सुराणां सुरसत्तमः ।
येन सैंहवपुः कृत्वा द्विधा कृत्वा च तत्पुनः ॥ २० ॥
पूर्वदैत्यो महावीर्यो हिरण्यकशिपुर्हतः ।
यः पुरा ह्यनलो भूत्वा और्वः संवर्तको विभुः ॥ २१ ॥
पातालस्थोऽर्णवरसं पपौ तोयमयं हरिः ।
सहस्रचरणं ब्रह्म सहस्रांशुसहस्रदम् ॥ २२ ॥
सहस्रशिरसं देवं यमाहुर्वै युगे युगे ।
नाभ्यां पद्मं समुद्भूतं यस्य पैतामहं गृहम् ॥ २३ ॥
एकार्णवे नागलोके सद्धिरण्मयपङ्कजम् ।
येन ते निहता दैत्याः संग्रामे तारकामये ॥ २४ ॥
येन देवमयं कृत्वा सर्वायुधधरं वपुः ।
गुहासंस्थेन चोत्सिक्तः कालनेमिर्निपातितः ॥ २५ ॥
उत्तरान्ते समुद्रस्य क्षीरोदस्यामृतोदधौ ।
यः शेते शाश्वतं योगमास्थाय तिमिरं महत् ॥ २६ ॥
सुरारणी गर्भमधत्त दिव्यं-
तपःप्रकर्षाददितिः पुराणम् ।

शक्रं च यो दैत्यगणावरुद्धं,
गर्भावधानेन कृतं चकार ॥ २७ ॥
पदानि यो योगमयानि कृत्वा,
चकार दैत्यान्सलिलेशयस्थान् ।
कृत्वा स देवांस्त्रिदशेश्वरांस्तु,
चक्रे सुरेशं पुरुहूतमेव ॥ २८ ॥
गार्हपत्येन विधिना अन्वाहार्येण कर्मणा ।
अग्निमावहनीयं च वेदं दीक्षां समिद्ध्रुवम् ॥ २६ ॥
प्रोक्षणीयं स्रुवं चैव आवभृथ्यं तथैव च ।
अवाक्पाणिस्तु यश्चक्रे हव्यभागभुजस्तथा ॥ ३० ॥
हव्यादांश्च सुरांश्चक्रे कव्यादांश्च पितृनथ ।
भोगार्थे यज्ञविधिनाऽयोजयद्यज्ञकर्मणि ॥ ३१ ॥
पात्राणि दक्षिणां दीक्षां चरूंश्चोलूखलानि च ।
यूपं समित्स्रुवं सोमं पवित्रान्परिधीनपि ॥ ३२ ॥
यज्ञियानि च द्रव्याणि चमसांश्च तथाऽपरान् ।
सदस्यान्यजमानांश्च मेधादींश्च क्रतूत्तमान् ॥ ३३ ॥
विबभाज पुरा यस्तु पारमेष्ठ्येन कर्मणा ।
युगानुरूपं यः कृत्वा लोकाननुपराक्रमान् ॥ ३४ ॥
क्षणा निमेषाः काष्ठाश्च कलास्त्रैकाल्यमेव च ।
मुहूर्तास्तिथयो मासा दिनं संवत्सरस्तथा ॥ ३५ ॥
ऋतवः कालयोगाश्च प्रमाणं त्रिविधं त्रिषु ।
आयुःक्षेत्राण्युपचयो लक्षणं रूपसौष्ठवम् ॥ ३६ ॥

त्रयो लोकास्त्रयो देवास्त्रैविद्यं पावकास्त्रयः ।
त्रैकाल्यं त्रीणि कर्माणि त्रयो वर्णास्त्रयो गुणाः ॥ ३७ ॥
सृष्टा लोकाः पुरा सर्वे येनानन्तेन कर्मणा ।
सर्वभूतगतः स्रष्टा सर्वभूतगुणात्मकः ॥ ३८ ॥
नृणामिन्द्रियपूर्वेण योगेन रमते च यः ।
गतागताभ्यां योगेन य एव विधिरीश्वरः ॥ ३९ ॥
यो गतिर्धर्मयुक्तानामगतिः पापकर्मणाम् ।
चातुर्वर्ण्यस्य प्रभवश्चातुर्वर्ण्यस्य रक्षिता ॥ ४० ॥
चातुर्विद्यस्य यो वेत्ता चातुराश्रम्यसंश्रयः ।
दिगन्तरं नभो भूमिर्वायुर्वाऽपि विभावसुः ॥ ४१ ॥
चन्द्रसूर्यमयं ज्योतिर्युगेशः क्षणदाचरः ।
यः परं श्रूयते ज्योतिर्यः परं श्रूयते तपः ॥ ४२ ॥
यं परं प्राहुरपरं यः परः परमात्मवान् ।
आदित्यानां तु यो देवो यश्च दैत्यान्तको विभुः ॥ ४३ ॥
युगान्तेष्वन्तको यश्च यश्च लोकान्तकान्तकः ।
सेतुर्यो लोकसेतूनां मेध्यो यो मेध्यकर्मणाम् ॥ ४४ ॥
वेद्यो यो वेदविदुषां प्रभुर्यः प्रभवात्मनाम् ।
सोमभूतश्च सौम्यानामग्निभूतोऽग्निवर्चसाम् ॥ ४५ ॥
यः शक्राणामीशभूतस्तपोभूतस्तपस्विनाम् ।
विनयो नयवृत्तीनां तेजस्तेजस्विनामपि ॥ ४६ ॥
विग्रहो विग्रहार्हाणां गतिर्गतिमतामपि ।
आकाशप्रभवो वायुर्वायोः प्राणाद्धुताशनः ॥ ४७ ॥

दिवो हुताशनः प्राणः प्राणोऽग्निर्मधुसूदनः ।
रसाच्छोणितसंभूतिः शोणितान्मांसमुच्यते ॥ ४८ ॥
मांसात्तु मेदसो जन्म मेदसोऽस्थि निरुच्यते ।
अस्थ्नो मज्जा समभवन्मज्जातः शुक्रसंभवः ॥ ४९ ॥
शुक्राद्गर्भः समभवद्रसमूलेन कर्मणा ।
तत्रापां प्रथमो भागः स सौम्यो राशिरुच्यते ॥ ५० ॥
गर्भोष्मसंभवो ज्ञेयो द्वितीयो राशिरुच्यते ।
शुक्रं सोमात्मकं विद्यादार्तवं पावकात्मकम् ॥ ५१ ॥
भावा रसानुगाश्चैषां बीजे च शशिपावकौ ।
कफवर्गे भवेच्छुक्रं पित्तवर्गे च शोणितम् ॥ ५२ ॥
कफस्य हृदयं स्थानं नाभ्यां पित्तं प्रतिष्ठितम् ।
देहस्य मध्ये हृदयं स्थानं तन्मनसः स्मृतम् ॥ ५३ ॥
नाभिकोष्ठान्तरं यत्तु तत्र देवो हुताशनः ।
मनः प्रजापतिर्ज्ञेयः कफः सोमो विभाव्यते ॥ ५४ ॥
पित्तमग्निः स्मृतं त्वेवमग्निसोमात्मकं जगत् ।
एवं प्रवर्तिते गर्भे वर्धितेऽर्बुदसंनिभे ॥ ५५ ॥
वायुः प्रवेशं संचक्रे संगतः परमात्मनः ।
स पञ्चधा शरीरस्थो भिद्यते वर्तते पुनः ॥ ५६ ॥
प्राणापानौ समानश्च उदानो व्यान एव च ।
प्राणोस्य परमात्मानं वर्धयन्परिवर्तते ॥ ५७ ॥
अपानः पश्चिमं कायमुदानोऽर्ध्वं शरीरिणः ।
व्यानस्तु व्याप्यते येन समानः संनिवर्तते ॥ ५८ ॥

भूतावाप्तिस्ततस्तस्य जायेतेन्द्रियगोचरा ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ ५९ ॥
तस्येन्द्रियनिविष्टानि स्वं स्वं भागं प्रचक्रिरे ।
पार्थिवं देहमाहुस्तु प्राणात्मानं च मारुतम् ॥ ६० ॥
छिद्राण्याकाशयोनीनि जलात्स्रावः प्रवर्तते ।
ज्योतिश्चक्षूंषि तेजश्च आत्मा तेषां मनः स्मृतम् ॥ ६१ ॥
ग्रामाश्च विषयाश्चैव यस्य वीर्यात्प्रवर्तिताः ।
इत्येतान्पुरुषः सर्वान्सृजँल्लोकान्सनातनः ॥ ६२ ॥
नैधनेऽस्मिन्कथं लोके नरत्वं विष्णुरागतः ।
एष नः संशयो ब्रह्मन्नेष नो विस्मयो महान् ॥ ६३ ॥
कथं गतिर्गतिमतामापन्नो मानुषीं तनुम् ।
आश्चर्यं परमं विष्णुर्देवैर्दैत्यैश्च कथ्यते ॥ ६४ ॥
विष्णोरुत्पत्तिमाश्चर्यं कथयस्व महामुने ।
प्रख्यातबलवीर्यस्य विष्णोरमिततेजसः ॥ ६५ ॥
कर्मणाऽऽश्चर्यभूतस्य विष्णोस्तत्त्वमिहोच्यताम् ।
कथं स देवो देवानामार्तिहा पुरुषोत्तमः ॥ ६६ ॥
सर्वव्यापी जगन्नाथः सर्वलोकमहेश्वरः ।
सर्गस्थित्यन्तकृद्देवः सर्वलोकसुखावहः ॥ ६७ ॥
अक्षयः शाश्वतोऽनन्तः क्षयवृद्धिविवर्जितः ।
निर्लेपो निर्गुणः सूक्ष्मो निर्विकारो निरञ्जनः ॥ ६८ ॥
सर्वोपाधिविनिर्मुक्तः सत्तामात्रव्यवस्थितः ।
अविकारी विभुर्नित्यः परमात्मा सनातनः ॥ ६९ ॥

अचलो निर्मलो व्यापी नित्यतृप्तो निराश्रयः ।
विशुद्धं श्रूयते यस्य हरित्वं च कृते युगे ॥ ७० ॥
वैकुण्ठत्वं च देवेषु कृष्णत्वं मानुषेषु च ।
ईश्वरस्य हि तस्येमां गहनां कर्मणो गतिम् ॥ ७१ ॥
समतीतां भविष्यं च श्रोतुमिच्छा प्रवर्तते ।
अव्यक्तो व्यक्तलिङ्गस्थो य एव भगवान्प्रभुः ॥ ७२ ॥
नारायणो ह्यनन्तात्मा प्रभवोऽव्यय एव च ।
एष नारायणो भूत्वा हरीरासीत्सनातनः ॥ ७३ ॥
ब्रह्मा शक्रश्च रुद्रश्च धर्मः शुक्रो बृहस्पतिः ।
प्रधानात्मा पुरा ह्येष ब्रह्माणमसृजत्प्रभुः ॥ ७४ ॥
सोऽसृजत्पूर्वपुरुषः पुरा कल्पे प्रजापतीन् ।
एवं स भगवान्विष्णुः सर्वलोकमहेश्वरः ॥
किमर्थं मर्त्यलोकेऽस्मिन्यातो यदुकुले हरिः ॥ ७५ ॥

इति श्रीमहापुराणे आदिब्राह्मे स्वयंभुऋषिसंवादे ऋषिप्रश्ननिरूपणं नामोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

——

# अथाशीत्यधिकशततमोऽध्यायः ।

## श्रीकृष्णचरितारम्भः

व्यास उवाच ।

नमस्कृत्वा सुरेशाय विष्णवे प्रभविष्णवे ।
पुराणाय पुराणाय शाश्वतायाव्ययाय च ॥ १ ॥

चतुर्व्यूहात्मने तस्मै निर्गुणाय गुणाय च ।
वरिष्ठाय गरिष्ठाय वरेण्यायामिताय च ॥ २ ॥
यज्ञाङ्गायाखिलाङ्गाय देवाद्यैरीप्सिताय च ।
यस्मादणुतरं नास्ति यस्मान्नास्ति बृहत्तरम् ॥ ३ ॥
येन विश्वमिदं व्याप्तमजेन सचराचरम् ।
आविर्भावतिरोभावदृष्टादृष्टविलक्षणम् ॥ ४ ॥
वदन्ति यत्सृष्टमिति तथैवाप्युपसंहृतम् ।
ब्रह्मणे चाऽऽदिदेवाय नमस्कृत्य समाधिना ॥ ५ ॥
अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय जिष्णवे विष्णवे नमः ॥ ६ ॥
नमो हिरण्यगर्भाय हरये शंकराय च ।
वासुदेवाय ताराय सर्गस्थित्यन्तकारिणे ॥ ७ ॥
एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः ।
अव्यक्तव्यक्तभूताय विष्णवे मुक्तिहेतवे ॥ ८ ॥
सर्गस्थितिविनाशानां जगतो यो जगन्मयः ।
मूलभूतो नमस्तस्मै विष्णवे परमात्मने ॥ ९ ॥
आधारभूतं विश्वस्याप्यणीयांसमणीयसाम् ।
प्रणम्य सर्वभूतस्थमच्युतं पुरुषोत्तमम् ॥ १० ॥
ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥ ११ ॥
विष्णुं ग्रसिष्णुं विश्वस्य स्थितिसर्गे तथा प्रभुम् ।
अनादिं जगतामीशमजमक्षयमव्ययम् ॥ १२ ॥

कथयामि यथा पूर्वं यक्षाद्यैर्मुनिसत्तमैः ।
पृष्टः प्रोवाच भगवानब्जयोनिः पितामहः ॥ १३ ॥
ऋक्सामान्युद्गिरन्वक्त्रैर्यः पुनाति जगत्त्रयम् ।
प्रणिपत्य तथेशानमेकार्णवविनिर्गतम् ॥ १४ ॥
यस्यासुरगणा यज्ञान्विलुम्पन्ति न याजिनाम् ।
प्रवक्ष्यामि मतं कृत्स्नं ब्रह्मणोऽव्यक्तजन्मनः ॥ १५ ॥
येन सृष्टिं समुद्दिश्य धर्माद्याः प्रकटीकृताः ।
आपो नारा इति प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः ॥ १६ ॥
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ।
स देवो भगवान्सर्वं व्याप्य नारायणो विभुः ॥ १७ ॥
चतुर्धा संस्थितो ब्रह्मा सगुणो निर्गुणस्तथा ।
एका मूर्तिरनुद्देश्या शुक्ला पश्यन्ति तां बुधाः ॥ १८ ॥
ज्वालामालावनद्धाङ्गी निष्ठा सा योगिनां परा ।
दूरस्था चान्तिकस्था च विज्ञेया सा गुणातिगा ॥ १९ ॥
वासुदेवाभिधानाऽसौ निर्ममत्वेन दृश्यते ।
रूपवर्णादयस्तस्या न भावाः कल्पनामयाः ॥ २० ॥
आस्ते च सा सदा शुद्धा सुप्रतिष्ठैकरूपिणी ।
द्वितीया पृथिवीं मूर्ध्ना शेषाख्या धारयत्यधः ॥ २१ ॥
तामसी सा समाख्याता तिर्यक्त्वं समुपागता ।
तृतीया कर्म कुरुते प्रजापालनतत्परा ॥ २२ ॥
सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी ।
चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा ॥ २३ ॥

रजस्तस्या गुणः सर्गं सा करोति सदैव हि ।
या तृतीया हरेर्मूर्तिः प्रजापालनतत्परा ॥ २४ ॥
सा तु धर्मव्यवस्थानं करोति नियतं भुवि ।
प्रोद्धतानसुरान्हन्ति धर्मव्युच्छित्तिकारिणः ॥ २५ ॥
पाति देवान्सगन्धर्वान्धर्मरक्षापरायणान् ।
यदा यदा च धर्मस्य ग्लानिः समुपजायते ॥ २६ ॥
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजत्यसौ ।
भूत्वा पुरा वराहेण तुण्डेनापो निरस्य च ॥ २७ ॥
एकया दंष्ट्रयोत्खाता नलीनीव वसुंधरा ।
कृत्वा नृसिंहरूपं च हिरण्यकशिपुर्हतः । २८ ॥
विप्रचित्तिमुखाश्चान्ये दानवा विनिपातिताः ।
वामनं रूपमास्थाय बलिं संयम्य मायया ॥ २९ ॥
त्रैलोक्यं क्रान्तवानेव विनिर्जित्य दितेः सुतान् ।
भृगोर्वंशे समुत्पन्नो जामदग्न्यः प्रतापवान् ॥ ३० ॥
जघान क्षत्रियान्रामः पितुर्वधमनुस्मरन् ।
तथाऽत्रितनयो भूत्वा दत्तात्रेयः प्रतापवान् ॥ ३१ ॥
योगमष्टाङ्गमाचख्यावलर्काय महात्मने ।
रामो दाशरथिर्भूत्वा स तु देवः प्रतापवान् ॥ ३२ ॥
जघान रावणं संख्ये त्रैलोक्यस्य भयंकरम् ।
यदा चैकार्णवे सुप्तो देवदेवो जगत्पतिः ॥ ३३ ॥
सहस्रयुगपर्यन्तं नागपर्यङ्कगो विभुः ।
योगनिद्रां समास्थाय स्वे महिम्नि व्यवस्थितः ॥ ३४ ॥

त्रैलोक्यमुदरे कृत्वा जगत्स्थावरजङ्गमम् ।
जनलोकगतैः सिद्धैः स्तूयमानो महर्षिभिः ॥ ३५ ॥
तस्य नाभौ समुत्पन्नं पद्मं दिव्यत्रमण्डितम् ।
मरुत्किञ्जल्कसंयुक्तं गृहं पैतामहं वरम् ॥ ३६ ॥
यत्र ब्रह्मा समुत्पन्नो देवदेवश्चतुर्मुखः ।
तदा कर्णमलोद्भूतौ दानवौ मधुकैटभौ ॥ ३७ ॥
महाबलौ महावीर्यौ ब्रह्माणं हन्तुमुद्यतौ ।
जघान तौ दुराधर्षौ उत्थाय शयनोदधेः ॥ ३८ ॥
एवमादींस्तथैवान्यानसंख्यातुमिहोत्सहे ।
अवतारो ह्यजस्येह माथुरः सांप्रतस्त्वयम् ॥ ३९ ॥
इति सा सात्त्विकी मूर्तिरवतारं करोति च ।
प्रद्युम्नेति समाख्याता रक्षाकर्मण्यवस्थिता ॥ ४० ॥
देवत्वेऽथ मनुष्यत्वे तिर्यग्योनौ च संस्थिता ।
गृह्णाति तत्स्वभावश्च वासुदेवेच्छया सदा ॥ ४१ ॥
ददात्यभिमतान्कामान्पूजिता सा द्विजोत्तमाः ।
एवं मया समाख्यातः कृतकृत्योऽपि यः प्रभुः ॥
मानुषत्वं गतो विष्णुः शृणुध्वं चोत्तरं पुनः ॥ ४२ ॥

इति श्रीमहापुराणे आदिब्राह्मे व्यासऋषिसंवादे चतुर्व्यूह-
वर्णनं नामाशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

——

# अथैकाशीत्यधिकशततमोऽध्यायः ।

## अवतारप्रयोजनवर्णनम्

व्यास उवाच ।

शृणुध्वं मुनिशार्दूलाः प्रवक्ष्यामि समासतः ।
अवतारं हरेश्चात्र भारावतरणेच्छया ॥ १ ॥
यदा यदा त्वधर्मस्य वृद्धिर्भवति भो द्विजाः ।
धर्मश्च ह्रासमभ्येति तदा देवो जनार्दनः ॥ २ ॥
अवतारं करोत्यत्र द्विधा कृत्वाऽऽत्मनस्तनुम् ।
साधूनां रक्षणार्थाय धर्मसंस्थापनाय च ॥ ३ ॥
दुष्टानां निग्रहार्थाय अन्येषां च सुरद्विषाम् ।
प्रजानां रक्षणार्थाय जायतेऽसौ युगे युगे ॥ ४ ॥
पुरा किल मही विप्रा भूरिभारावपीडिता ।
जगाम धरणी मेरौ समाजे त्रिदिवौकसाम् ॥ ५ ॥
सब्रह्मकान्सुरान्सर्वान्प्रणिपत्याथ मेदिनी ।
कथयामास तत्सर्वं खेदात्करुणभाषिणी ॥ ६ ॥

धरण्युवाच ।

अग्निः सुवर्णस्य गुरुर्गवां सूर्योऽपरो गुरुः ।
ममाप्यखिललोकानां वन्द्यो नारायणो गुरुः ॥ ७ ॥
तत्सांप्रतमिमे दैत्याः कालनेमिपुरोगमाः ।
मर्त्यलोकं समागम्य बाधन्तेऽहर्निशं प्रजाः ॥ ८ ॥

कालनेमिर्हतो योऽसौ विष्णुना प्रभविष्णुना ।
उग्रसेनसुतः कंसः संभूतः सुमहासुरः ॥ ९ ॥
अरिष्टो धेनुकः केशी प्रलम्बो नरकस्तथा ।
सुन्दोऽसुरस्तथाऽत्युग्रो बाणश्चापि बले सुतः ॥ १० ॥
तथाऽन्ये च महावीर्या नृपाणां भवनेषु ये ।
समुत्पन्ना दुरात्मानस्तान्न संख्यातुमुत्सहे ॥ ११ ॥
अक्षौहिण्यो हि बहुला दिव्यमूर्तिधृताः सुराः ।
महाबलानां दृप्तानां दैत्येन्द्राणां ममोपरि ॥ १२ ॥
तद्भूरिभारपीडार्ता न शक्नोम्यमरेश्वराः ।
बिभर्तुमात्मानमहमिति विज्ञापयामि वः ॥ १३ ॥
क्रियतां तन्महाभागा मम भारावतारणम् ।
यथा रसातलं नाहं गच्छेयमतिविह्वला ॥ १४ ॥

व्यास उवाच ।

इत्याकर्ण्य धरावाक्यमशेषैस्त्रिदशैस्ततः ।
भुवो भारावतारार्थं ब्रह्मा प्राह च चोदितः ॥ १५ ॥

ब्रह्मोवाच ।

यदाह वसुधा सर्वं सत्यमेतद्दिवौकसः ।
अहं भवो भवन्तश्च सर्वं नारायणात्मकम् ॥ १६ ॥
विभूतयस्तु यास्तस्य तासामेव परस्परम् ।
आधिक्यं न्यूनता बाध्यबाधकत्वेन वर्तते ॥ १७ ॥
तदागच्छत गच्छामः क्षीराब्धेस्तटमुत्तमम् ।
तत्राऽऽराध्य हरिं तस्मै सर्वं विज्ञापयाम वै ॥ १८ ॥

# अथैकाशीत्यधिकशततमोऽध्यायः ।

## अवतारप्रयोजनवर्णनम्

व्यास उवाच ।

शृणुध्वं मुनिशार्दूलाः प्रवक्ष्यामि समासतः ।
अवतारं हरेश्चात्र भारावतरणेच्छया ॥ १ ॥
यदा यदा त्वधर्मस्य वृद्धिर्भवति भो द्विजाः ।
धर्मश्च ह्रासमभ्येति तदा देवो जनार्दनः ॥ २ ॥
अवतारं करोत्यत्र द्विधा कृत्वाऽऽत्मनस्तनुम् ।
साधूनां रक्षणार्थाय धर्मसंस्थापनाय च ॥ ३ ॥
दुष्टानां निग्रहार्थाय अन्येषां च सुरद्विषाम् ।
प्रजानां रक्षणार्थाय जायतेऽसौ युगे युगे ॥ ४ ॥
पुरा किल मही विप्रा भूरिभारावपीडिता ।
जगाम धरणी मेरौ समाजे त्रिदिवौकसाम् ॥ ५ ॥
सब्रह्मकान्सुरान्सर्वान्प्रणिपत्याथ मेदिनी ।
कथयामास तत्सर्वं खेदात्करुणभाषिणी ॥ ६ ॥

धरण्युवाच ।

अग्निः सुवर्णस्य गुरुर्गवां सूर्योऽपरो गुरुः ।
ममाप्यखिललोकानां वन्द्यो नारायणो गुरुः ॥ ७ ॥
तत्सांप्रतमिमे दैत्याः कालनेमिपुरोगमाः ।
मर्त्यलोकं समागम्य बाधन्तेऽहर्निशं प्रजाः ॥ ८ ॥

कालनेमिर्हतो योऽसौ विष्णुना प्रभविष्णुना।
उग्रसेनसुतः कंसः संभूतः सुमहासुरः ॥ ६ ॥
अरिष्टो धेनुकः केशी प्रलम्बो नरकस्तथा।
सुन्दोऽसुरस्तथाऽत्युग्रो बाणश्चापि बलेः सुतः ॥ १० ॥
तथाऽन्ये च महावीर्या नृपाणां भवनेषु ये।
समुत्पन्ना दुरात्मानस्तान्न संख्यातुमुत्सहे ॥ ११ ॥
अक्षौहिण्यो हि बहुला दिव्यमूर्तिधृताः सुराः।
महाबलानां दृप्तानां दैत्येन्द्राणां ममोपरि ॥ १२ ॥
तद्भूरिभारपीडार्ता न शक्नोम्यमरेश्वराः।
बिभर्तुमात्मानमहमिति विज्ञापयामि वः ॥ १३ ॥
क्रियतां तन्महाभागा मम भारावतारणम्।
यथा रसातलं नाहं गच्छेयमतिविह्वला ॥ १४ ।

व्यास उवाच।

इत्याकर्ण्य धरावाक्यमशेषैस्त्रिदशैस्ततः।
भुवो भारावतारार्थं ब्रह्मा प्राह च चोदितः ॥ १५ ॥

ब्रह्मोवाच।

यदाह वसुधा सर्वं सत्यमेतद्दिवौकसः।
अहं भवो भवन्तश्च सर्वं नारायणात्मकम् ॥ १६ ॥
विभूतयस्तु यास्तस्य तासामेव परस्परम्।
आधिक्यं न्यूनता बाध्यबाधकत्वेन वर्तते ॥ १७ ॥
तदागच्छत गच्छामः क्षीराब्धेस्तटमुत्तमम्।
तत्राऽऽराध्य हरिं तस्मै सर्वं विज्ञापयाम वै ॥ १८ ॥

सर्वदैव जगत्यर्थे स सर्वात्मा जगन्मयः ।
स्वल्पांशेनावतीर्योर्व्यां धर्मस्य कुरुते स्थितिम् ॥ १६ ॥

व्यास उवाच ।

इत्युक्त्वा प्रययौ तत्र सह देवैः पितामहः
समाहितमना भूत्वा तुष्टाव गरुडध्वजम् ॥ २० ॥

ब्रह्मोवाच ।

नमो नमस्तेऽस्तु सहस्रमूर्ते,
सहस्रबाहो बहुवक्त्रपाद ।
नमो नमस्ते जगतः प्रवृत्ति-
विनाशसंस्थानपराप्रमेय ॥ २१ ॥
सूक्ष्मातिसूक्ष्मं च बृहत्प्रमाणं
गरीयसामप्यतिगौरवात्मन् ।
प्रधानबुद्धीन्द्रियवाक्प्रधान-
मूलापरात्मन्भगवन्प्रसीद ॥ २२ ॥
एषा मही देव महीप्रसूतै-
र्महासुरैः पीडितशैलबन्धा ।
परायणं त्वां जगतामुपैति,
भारावतारार्थमपारपारम् ॥ २३ ॥
एते वयं वृत्ररिपुस्तथाऽयं,
नासत्यदस्रौ वरुणस्तथैव ।
इमे च रुद्रा वसवः ससूर्याः,
समीरणाग्निप्रमुखास्तथाऽन्ये ॥ २४ ॥

सुराः समस्ताः सुरनाथ कार्य-
मेभिर्मया यच्च तदीश सर्वम् ।
आज्ञापयाऽऽज्ञां प्रतिपालयन्त-
स्तवैव तिष्ठाम सदाऽस्तदोषाः ॥ २५ ॥

व्यास उवाच ।

एवं संस्तूयमानस्तु भगवान्परमेश्वरः ।
उज्जहाराऽऽत्मनः केशौ सितकृष्णौ द्विजोत्तमाः ॥ २६ ॥
उवाच च सुरानेतौ मत्केशौ वसुधातले ।
अवतीर्य भुवो भारक्लेशहानिं करिष्यतः ॥ २७ ॥
सुराश्च सकलाः स्वांशैरवतीर्य महीतले ।
कुर्वन्तु युद्धमुन्मत्तैः पूर्वोत्पन्नैर्महासुरैः ॥ २८ ॥
ततः क्षयमशेषास्ते दैतेया धरणीतले ।
प्रयास्यन्ति न संदेहो नानायुधविचूर्णिताः ॥ २९ ॥
वसुदेवस्य या पत्नी देवकी देवतोपमा ।
तस्या गर्भोऽष्टमोऽयं तु मत्केशो भविता सुराः ॥ ३० ॥
अवतीर्य च तत्रायं कंसं घातयिता भुवि ।
कालनेमिसमुद्भूतमित्युक्त्वाऽन्तर्दधे हरिः ॥ ३१ ॥
अदृश्याय ततस्तेऽपि प्रणिपत्य महात्मने ।
मेरुपृष्ठं सुरा जग्मुरवतेरुश्च भूतले ॥ ३२ ॥
कंसाय चाष्टमो गर्भो देवक्या धरणीतले ।
भविष्यतीत्याचचक्षे भगवान्नारदो मुनिः ॥ ३३ ॥

कंसोऽपि तदुपश्रुत्य नारदात्कुपितस्ततः ।
देवकीं वसुदेवं च गृहे गुप्तावधारयत् ॥ ३४ ॥
जातं जातं च कंसाय तेनैवोक्तं यथा पुरा ।
तथैव वसुदेवोऽपि पुत्रमर्पितवान्द्विजाः ॥ ३५ ॥
हिरण्यकशिपोः पुत्राः षड्गर्भा इति विश्रुताः ।
विष्णुप्रयुक्ता तान्निद्रा क्रमाद्गर्भे न्ययोजयत् ॥ ३६ ॥
योगनिद्रा महामाया वैष्णवी मोहितं यया ।
अविद्यया जगत्सर्वं तामाह भगवान्हरिः ॥ ३७ ॥

विष्णुरुवाच ।

गच्छ निद्रे ममाऽऽदेशात्पातालतलसंश्रयान् ।
एकैकश्येन षड्गर्भान्देवकीजठरे नय ॥ ३८ ॥
हतेषु तेषु कंसेन शेषाख्योंऽशस्ततोऽनघः ।
अंशांशेनोदरे तस्याः सप्तमः संभविष्यति ॥ ३९ ॥
गोकुले वसुदेवस्य भार्या वै रोहिणी स्थिता ।
तस्याः प्रसूतिसमये गर्भो नेयस्त्वयोदरम् ॥ ४० ॥
सप्तमो भोजराजस्य भयाद्रोधोपरोधतः ।
देवक्याः पतितो गर्भ इति लोको वदिष्यति ॥ ४१ ॥
गर्भसंकर्षणात्सोऽथ लोके संकर्षणेति वै ।
संज्ञामवाप्स्यते वीरः श्वेताद्रिशिखरोपमः ॥ ४२ ॥
ततोऽहं संभविष्यामि देवकीजठरे शुभे ।
गर्भं त्वया यशोदाया गन्तव्यमविलम्बितम् ॥ ४३ ॥

प्रावृट्काले च नभसि कृष्णाष्टम्यामहं निशि।
उत्पत्स्यामि नवम्यां च प्रसूतिं त्वमवाप्स्यसि ॥ ४४ ॥
यशोदाशयने मां तु देवक्यास्त्वामनिन्दिते।
मच्छक्तिप्रेरितमतिर्वसुदेवो नयिष्यति ॥ ४५ ॥
कंसश्च त्वामुपादाय देवि शैलशिलातले।
प्रक्षेप्स्यत्यन्तरिक्षे च त्वं स्थानं समवाप्स्यसि ॥ ४६ ॥
ततस्त्वां शतधा शक्रः प्रणम्य मम गौरवात्।
प्रणिपातानतशिरा भगिनीत्वे ग्रहीष्यति ॥ ४७ ॥
ततः शुम्भनिशुम्भादीन्हत्वा दैत्यान्सहस्रशः।
स्थानैरनेकैः पृथिवीमशेषां मण्डयिष्यसि ॥ ४८ ॥
त्वं भूतिः संनतिः कीर्तिः कान्तिर्वै पृथिवी धृतिः।
लज्जा पुष्टिरुषा या च काचिदन्या त्वमेव सा ॥ ४९ ॥
ये त्वामार्येति दुर्गेति वेदगर्भेऽम्बिकेति च।
भद्रेति भद्रकालीति क्षेम्या क्षेमंकरीति च ॥ ५० ॥
प्रातश्चैवापराह्णे च स्तोष्यन्त्यानम्रमूर्तयः।
तेषां हि वाञ्छितं सर्वं मत्प्रसादाद्भविष्यति ॥ ५१ ॥
सुरामांसोपहारैस्तु भक्ष्यभोज्यैश्च पूजिता।
नृणामशेषकामांस्त्वं प्रसन्नायां प्रदास्यसि ॥ ५२ ॥
ते सर्वे सर्वदा भद्रा मत्प्रसादादसंशयम्।
असंदिग्धं भविष्यन्ति गच्छ देवि यथोदितम् ॥ ५३

इति श्रीमहापुराणे आदिब्राह्मे हरेरंशावतारनिरूपणं नामैका-
शीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

---

# अथ द्व्यशीत्यधिकशततमोऽध्यायः ।

## श्रीकृष्णोत्पत्तिकथानिरूपणम्

व्यास उवाच ।

यथोक्तं सा जगद्धात्री देवदेवेन वै पुरा ।
षड्गर्भगर्भविन्यासं चक्रे चान्यस्य कर्षणम् ॥ १ ॥
सप्तमे रोहिणीं प्राप्ते गर्भे गर्भे ततो हरिः ।
लोकत्रयोपकाराय देवक्याः प्रविवेश वै ॥ २ ॥
योगनिद्रा यशोदायास्तस्मिन्नेव ततो दिने ।
संभूता जठरे तद्वद्यथोक्तं परमेष्ठिना ॥ ३ ॥
ततो ग्रहगणः सम्यक्प्रचचार दिवि द्विजाः ।
विष्णोरंशे महीं यात ऋतवोऽप्यभवञ्शुभाः ॥ ४ ॥
नोत्सेहे देवकीं द्रष्टुं कश्चिदप्यतितेजसा ।
जाज्वल्यमानां तां दृष्ट्वा मनांसि क्षोभमाययुः ॥ ५ ॥
अदृष्टां पुरुषैः स्त्रीभिर्देवकीं देवतागणाः ।
बिभ्राणां वपुषा विष्णुं तुष्टुवुस्तामहर्निशम् ॥ ६ ॥

देवा ऊचुः ।

त्वं स्वाहा त्वं स्वधा विद्या सुधा त्वं ज्योतिरेव च ।
त्वं सर्वलोकरक्षार्थमवतीर्णा महीतले ॥ ७ ॥
प्रसीद देवि सर्वस्य जगतस्त्वं शुभं कुरु ।
प्रीत्यर्थं धारयेशानं धृतं येनाखिलं जगत् ॥ ८ ॥

व्यास उवाच ।

एवं संस्तूयमाना सा देवैर्देवमधारयत् ।
गर्भेण पुण्डरीकाक्षं जगतां त्राणकारणम् ॥ ९ ॥
ततोऽखिलजगत्पद्मबोधायाच्युतभानुना ।
देवक्याः पूर्वसंध्यायामाविर्भूतं महात्मना ॥ १० ॥
मध्यरात्रेऽखिलाधारे जायमाने जनार्दने ।
मन्दं जगर्जुर्जलदाः पुष्पवृष्टिमुचः सुराः ॥ ११ ॥
फुल्लेन्दीवरपत्राभं चतुर्बाहुमुदीक्ष्य तम् ।
श्रीवत्सवक्षसं जातं तुष्टावाऽऽनकदुन्दुभिः ॥ १२ ॥
अभिष्टूय च तं वाग्भिः प्रसन्नाभिर्महामतिः ।
विज्ञापयामास तदा कंसाद्भीतो द्विजोत्तमाः ॥ १३ ॥

वसुदेव उवाच ।

ज्ञातोऽसि देवदेवेश शङ्खचक्रगदाधर ।
दिव्यं रूपमिदं देव प्रसादेनोपसंहर ॥ १४ ॥
अद्यैव देव कंसोऽयं कुरुते मम यातनाम् ।
अवतीर्णमिति ज्ञात्वा त्वामस्मिन्मन्दिरे मम ॥ १५ ॥

देवक्युवाच ।

योऽनन्तरूपोऽखिलविश्वरूपो,
गर्भेऽपि लोकान्वपुषा बिभर्ति ।
प्रसीदतामेष स देवदेवः,
स्वमाययाऽऽविष्कृतबालरूपः ॥ १६ ॥

उपसंहर सर्वात्मन्रूपमेतच्चतुर्भुजम् ।
जानातु माऽवतारं ते कंसोऽयं दितिजान्तक ॥ १७ ॥
श्रीभगवानुवाच ।
स्तुतोऽहं यत्त्वया पूर्वं पुत्रार्थिन्या तदद्य ते ।
सफलं देवि संजातं जातोऽहं यत्तवोदरात् ॥ १८ ॥
व्यास उवाच ।
इत्युक्त्वा भगवांस्तूर्ष्णीं बभूव मुनिसत्तमाः ।
वसुदेवोऽपि तं रात्रावादाय प्रययौ बहिः ॥ १९ ॥
मोहिताश्चाभवंस्तत्र रक्षिणो योगनिद्रया ।
मथुराद्वारपालाश्च व्रजत्यानकदुन्दुभौ ॥ २० ॥
वर्षतां जलदानां च तत्तोयमुल्वणं निशि ।
संछाद्य तं ययौ शेषः फणैरानकदुन्दुभिम् ॥ २१ ॥
यमुनां चातिगम्भीरां नानावर्तशताकुलाम् ।
वसुदेवो वहन्विष्णुं जानुमात्रवहां ययौ ॥ २२ ॥
कंसस्य करमादाय तत्रैवाभ्यागतांस्तटे ।
नन्दादीन्गोपवृद्धांश्च यमुनायां ददर्श सः ॥ २३ ॥
तस्मिन्काले यशोदाऽपि मोहिता योगनिद्रया ।
तामेव कन्यां मुनयःप्रासूत मोहिते जने ॥ २४ ॥
वसुदेवोऽपि विन्यस्य बालमादाय दारिकाम् ।
यशोदाशयने तूर्णमाजगामामितद्युतिः ॥ २५ ॥
ददर्श च विबुद्ध्वा सा यशोदा जातमात्मजम् ।
नीलोत्पलदलश्यामं ततोऽत्यर्थं मुदं ययौ ॥ २६ ॥

आदाय वसुदेवोऽपि दारिकां निजमन्दिरम् ।
देवकीशयने न्यस्य यथापूर्वमतिष्ठत ॥ २७ ॥
ततो बालध्वनिं श्रुत्वा रक्षिणः सहसोत्थिताः ।
कंसमावेदयामासुर्देवकीप्रसवं द्विजाः ॥ २८ ॥
कंसस्तूर्णमुपेत्यैनां ततो जग्राह बालिकाम् ।
मुञ्च मुञ्चेति देवक्याऽऽसन्नकण्ठं निवारितः ॥ २९ ॥
चिक्षेप च शिलापृष्ठे सा क्षिप्ता वियति स्थितम् ।
अवाप रूपं च महत्सायुधाष्टमहाभुजम् ॥
प्रजहास तथैवोच्चैः कंसं च रुषिताऽब्रवीत् ॥ ३० ॥

योगमायोवाच ।

किं मयाऽऽक्षिप्तया कंस जातो यस्त्वां हनिष्यति ।
सर्वस्वभूतो देवानामासीन्मृत्युः पुरा स ते ॥
तदेतत्संप्रधार्याऽऽशु क्रियतां हितमात्मनः ॥ ३१ ॥

व्यास उवाच ।

इत्युक्त्वा प्रययौ देवी दिव्यस्रग्गन्धभूषणा ।
पश्यतो भोजराजस्य स्तुता सिद्धैर्विहायसा ॥ ३२ ॥

इति श्रीमहापुराणे आदिब्राह्मे श्रीकृष्णोत्पत्तिकथानिरूपणं नाम द्व्यशीत्यधिकशततमोऽध्यायः ॥ ८२ ॥

——

# अथ त्र्यशीत्यधिकशततमोऽध्यायः ।

## कंसविचारकथनम्

व्यास उवाच ।

कंसस्त्वथोद्विग्नमनाः प्राह सर्वान्महासुरान् ।
प्रलम्बकेशिप्रमुखानाहूयासुरपुंगवान् ॥ १ ॥

कंस उवाच ।

हे प्रलम्ब महाबाहो केशिन्धेनुक पूतने ।
अरिष्टाद्यैस्तथा चान्यैः श्रूयतां वचनं मम ॥ २ ॥
मां हन्तुममरैर्यत्नः कृतः किल दुरात्मभिः ।
मद्वीर्यतापितान्वीरान्न त्वेतान्गणयाम्यहम् ॥ ३ ॥
आश्चर्यं कन्यया चोक्तं जायते दैत्यपुंगवाः ।
हास्यं मे जायते वीरास्तेषु यत्नपरेष्वपि ॥ ४ ॥
तथाऽपि खलु दुष्टानां तेषामप्यधिकं मया ।
अपकाराय दैत्येन्द्रा यतनीयं दुरात्मनाम् ॥ ५ ॥
उत्पन्नश्चापि मृत्युर्मे भूतभव्यभवत्प्रभुः ।
इत्येतद्बालिका प्राह देवकीगर्भसंभवा ॥ ६ ॥
तस्माद्बालेषु परमो यत्नः कार्यो महीतले ।
यत्रोद्रिक्तं बलं बाले स हन्तव्यः प्रयत्नतः ॥ ७ ॥

व्यास उवाच ।

इत्याज्ञाप्यासुरान्कंसः प्रविश्याऽऽत्मगृहं ततः ।
उवाच वसुदेवं च देवकीमविरोधतः ॥ ८ ॥

कंस उवाच ।

युवयोर्घातिता गर्भा वृथैवैते मयाऽधुना ।
कोऽप्यन्य एव नाशाय बालो मम समुद्गतः ॥ ६ ॥
तदलं परितापेन नूनं यद्भाविनो हि ते ।
अर्भका युवयोः को वा आयुषोऽन्ते न हन्यते ॥ १० ॥

व्यास उवाच ।

इत्याश्वास्य विमुच्यैव कंसस्तौ परितोष्य च ।
अन्तर्गृहं द्विजश्रेष्ठाः प्रविवेश पुनः स्वकम् ॥ ११ ॥

इति श्रीमहापुराणे आदिब्राह्मे श्रीकृष्णबालचरिते कंसविचार-कथनं नाम त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

---

# अथ चतुरशीत्यधिकशततमोऽध्यायः ।

## श्रीकृष्णबालचरितवर्णनम्

व्यास उवाच ।

विमुक्तो वसुदेवोऽपि नन्दस्य शकटं गतः ।
प्रहृष्टं दृष्टवान्नन्दं पुत्रो जातो ममेति वै ॥ १ ॥
वसुदेवोपि तं प्राह दिष्ट्या दिष्ट्येति सादरम् ।
वार्धकेऽपि समुत्पन्नस्तनयोऽयं तवाधुना ॥ २ ॥
दत्तो हि वार्षिकः सर्वो भवद्भिर्नृपतेः करः ।
यदर्थमागतस्तस्मान्नात्र स्थेयं महात्मना ॥ ३ ॥

यदर्थमागतः कार्यं तन्निष्पन्नं किमास्यते ।
भवद्भिर्गम्यतां नन्द तच्छीघ्रं निजगोकुलम् ॥ ४ ॥
ममापि बालकस्तत्र रोहिणीप्रसवो हि यः ।
स रक्षणीयो भवता यथाऽयं तनयो निजः ॥ ५ ॥

व्यास उवाच ।

इत्युक्ताः प्रययुर्गोपा नन्दगोपपुरोगमाः ।
शकटारोपितैर्भाण्डैः करं दत्त्वा महाबलाः ॥ ६ ॥
वसतां गोकुले तेषां पूतना बालघातिनी ।
सुप्तं कृष्णमुपादाय रात्रौ च प्रददौ स्तनम् ॥ ७ ॥
यस्मै यस्मै स्तनं रात्रौ पूतना संप्रयच्छति ।
तस्य तस्य क्षणेनाङ्गं बालकस्योपहन्यते ॥ ८ ॥
कृष्णस्तस्याः स्तनं गाढं कराभ्यामतिपीडितम् ।
गृहीत्वा प्राणसहितं पपौ क्रोधसमन्वितः ॥ ९ ॥
सा विमुक्तमहारावा विच्छिन्नस्नायुबन्धना ।
पपात पूतना भूमौ म्रियमाणाऽतिभीषणा १० ॥
तन्नादश्रुतिसंत्रासाद्विबुद्धास्ते व्रजौकसः ।
ददृशुः पूतनोत्सङ्गे कृष्णं तां च निपातिताम् ॥ ११ ॥
आदाय कृष्णं संत्रस्ता यशोदा च ततो द्विजाः ।
गोपुच्छभ्रामणाद्यैश्च बालदोषमपाकरोत् ॥ १२ ॥
गोपुरीषमुपादाय नन्दगोपोऽपि मस्तके ।
कृष्णस्य प्रददौ रक्षां कुर्वन्निदमुदैरयत् ॥ १३ ॥

नन्दगोप उवाच ।

रक्षते त्वामशेषाणां भूतानां प्रभवो हरिः ।
यस्य नाभिसमुद्भूतात्पङ्कजादभवज्जगत् ॥ १४ ॥
येन दंष्ट्राग्रविधृता धारयत्यवनी जगत् ।
वराहरूपधृग्देवः स त्वां रक्षतु केशवः ॥ १५ ॥
गुह्यं स जठरं विष्णुर्जङ्घा पादौ जनार्दनः ।
वामनो रक्षतु सदा भवन्तं यः क्षणादभूत् ॥ १६ ॥
त्रिविक्रमक्रमाक्रान्तत्रैलोक्यस्फुरदायुधः ।
शिरस्ते पातु गोविन्दः कण्ठं रक्षतु केशवः ॥ १७ ॥
मुखबाहू प्रबाहू च मनः सर्वेन्द्रियाणि च ।
रक्षत्वव्याहतैश्वर्यस्तव नारायणोऽव्ययः ॥ १८ ॥
त्वां दिक्षु पातु वैकुण्ठो विदिक्षु मधुसूदनः ।
हृषीकेशोऽम्बरे भूमौ रक्षतु त्वां महीधरः ॥ १९ ॥

व्यास उवाच ।

एवं कृतस्वस्त्ययनो नन्दगोपेन बालकः ।
शायितः शकटस्याधो बालपर्यङ्किकातले ॥ २० ॥
ते च गोपा महद्दृष्ट्वा पूतनायाः कलेवरम् ।
मृतायाः परमं त्रासं विस्मयं च तदा ययुः ॥ २१ ॥
कदाचिच्छकटस्याधः शयानो मधुसूदनः ।
चिक्षेप चरणावूर्ध्वं स्तनार्थी प्ररुरोद च ॥ २२ ॥
तस्य पादप्रहारेण शकटं परिवर्तितम् ।
विध्वस्तभाण्डकुम्भं तद्विपरीतं पपात वै ॥ २३ ॥

ततो हाहाकृतः सर्वो गोपगोपीजनो द्विजाः ।
आजगाम तदा ज्ञात्वा बालमुत्तानशायिनम् ॥ २४ ॥
गोपाः केनेति जगदुः शकटं परिवर्तितम् ।
तत्रैव बालकाः प्रोचुर्बालेनानेन पातितम् ॥ २५ ॥
रुदता दृष्टमस्माभिः पादविक्षेपताडितम् ।
शकटं परिवृत्तं वै नैतदन्यस्य चेष्टितम् ॥ २६ ॥
ततः पुनरतीवाऽऽसन्गोपा विस्मितचेतसः ।
नन्दगोपोऽपि जग्राह बालमत्यन्तविस्मितः ॥ २७ ॥
यशोदा विस्मयारूढा भग्नभाण्डकपालकम् ।
शकटं चार्चयामास दधिपुष्पफलाक्षतैः ॥ २८ ॥
गर्गश्च गोकुले तत्र वसुदेवप्रचोदितः ।
प्रच्छन्न एव गोपानां संस्कारमकरोत्तयोः ॥ २९ ॥
ज्येष्ठं च राममित्याह कृष्णं चैव तथाऽपरम् ।
गर्गो मतिमतां श्रेष्ठो नाम कुर्वन्महामतिः ॥ ३० ॥
अल्पेनैव हि कालेन विज्ञातौ तौ महाबलौ ।
घृष्टजानुकरौ विप्रा बभूवतुरुभावपि ॥ ३१ ॥
धाङ्गौ भ्रममाणावितस्ततः ।
न निवारयितुं शक्ता यशोदा तौ न रोहिणी ॥ ३२ ॥
गोवाटमध्ये क्रीडन्तौ वत्सवाटगतौ पुनः ।
तदहर्जातगोवत्सपुच्छाकर्षणतत्परौ ॥ ३३ ॥
यदा यशोदा तौ बालावेकस्थानचरावुभौ ।
शशाक नो वारयितुं क्रीडन्तावतिचञ्चलौ ॥ ३४ ॥

दाम्ना बद्ध्वा तदा मध्ये निबबन्ध उलूखले।
कृष्णमक्लिष्टकर्माणमाह चेदममर्षिता ॥ ३५ ॥

यशोदोवाच।

यदि शक्तोऽसि गच्छ त्वमतिचञ्चलचेष्टित ॥ ३६ ॥

व्यास उवाच।

इत्युक्त्वा च निजं कर्म सा चकार कुटुम्बिनी।
व्यग्रायामथ तस्यां स कर्षमाण उलूखलम् ॥ ३७ ॥
यमलार्जुनयोर्मध्ये जगाम कमलेक्षणः।
कर्षता वृक्षयोर्मध्ये तिर्यगेवमुलूखलम् ॥ ३८ ॥
भग्नावुत्तुङ्गशाखाग्रौ तेन तौ यमलार्जुनौ।
ततः कटकटाशब्दसमाकर्णनकातरः ॥ ३९ ॥
आजगाम व्रजजनो ददृशे च महाद्रुमौ।
भग्नस्कन्धौ निपतितौ भग्नशाखौ महीतले ॥ ४० ॥
ददर्श चाल्पदन्तास्यं स्मितहासं च बालकम्।
तयोर्मध्यगतं बद्धं दाम्ना गाढं तथोदरे ॥ ४१ ॥
ततश्च दामोदरतां स ययौ दामबन्धनात्।
गोपवृद्धास्ततः सर्वे नन्दगोपपुरोगमाः ॥ ४२ ॥
मन्त्रयामासुरुद्विग्ना महोत्पातातिभीरवः।
स्थानेनेह न नः कार्यं व्रजामोऽन्यन्महावनम् ॥ ४३ ॥
उत्पाता बहवो ह्यत्र दृश्यन्ते नाशहेतवः।
पूतनाया विनाशश्च शकटस्य विपर्ययः ॥ ४४ ॥

विना वातादिदोषेण द्रुमयोः पतनं तथा ।
वृन्दावनमितः स्थानात्तस्माद्गच्छाम मा चिरम् ॥ ४५ ॥
यावद्भौममहोत्पातदोषो नाभिभवेद्व्रजम् ।
इति कृत्वा मतिं सर्वे गमने ते व्रजौकसः ॥ ४६ ॥
ऊचुः स्वं स्वं कुलं शीघ्रं गम्यतां मा विलम्ब्यताम् ।
ततः क्षणेन प्रययुः शकटैर्गोधनैस्तथा ॥ ४७ ॥
यूथशो वत्सपालीश्च कालयन्तो व्रजौकसः ।
सर्वावयवनिर्धूतं क्षणमात्रेण तत्तदा ॥ ४८ ॥
काककाकीसमाकीर्णं व्रजस्थानमभूद् द्विजाः ।
वृन्दावनं भगवता कृष्णेनाक्लिष्टकर्मणा ॥ ४९ ॥
शुभेन मनसा ध्यातं गवां वृद्धिमभीप्सता ।
ततस्तत्रातिरूक्षेऽपि घर्मकाले द्विजोत्तमाः ॥ ५० ॥
प्रावृट्काल इवाभूच्च नवशष्पं समन्ततः ।
स समावासितः सर्वो व्रजो वृन्दावने ततः ॥ ५१ ॥
शकटीवाटपर्यन्तचन्द्रार्धाकारसंस्थितिः ।
वत्सबालौ च संवृत्तौ रामदामोदरौ ततः ॥ ५२ ॥
तत्र स्थितौ तौ गोष्ठे चेरतुर्बाललीलया ।
बर्हिपत्रकृतापीडौ वन्यपुष्पावतंसकौ ॥ ५३ ॥
गोपवेणुकृतातोद्यपत्रावाद्यकृतस्वनौ ।
काकपक्षधरौ बालौ कुमाराविव पावकौ ॥ ५४ ॥
हसन्तौ च रमन्तौ च चेरतुस्तन्महद्वनम् ।
क्वचिद्धसन्तावन्योन्यं क्रीडमानौ तथा परैः ॥ ५५ ॥

गोपपुत्रैः समं वत्सांश्चारयन्तौ विचेरतुः ।
कालेन गच्छता तौ तु सप्तवर्षौ बभूवतुः ॥ ५६ ॥
सर्वस्य जगतः पालौ वत्सपालौ महाव्रजे ।
प्रावृट्कालस्ततोऽतीव मेघौघस्थगिताम्बरः ॥ ५७ ॥
बभूव वारिधाराभिरैक्यं कुर्वन्दिशामिव ।
प्ररूढनवपुष्पाढ्या शक्रगोपवृता मही ॥ ५८ ॥
यथा मारकते वाऽऽसीत्पद्मरागविभूषिता ।
ऊहुरुन्मार्गगामीनि निम्नगाम्भांसि सर्वतः ॥ ५९ ॥
मनांसि दुर्विनीतानां प्राप्य लक्ष्मीं नवामिव ।
विकाले च यथाकामं व्रजमेत्य महाबलौ ॥
गोपैः समानैः सहितौ चिक्रीडातेऽमराविव ॥ ६० ॥

इति श्रीमहापुराणे आदिब्राह्मे बालचरिते वृन्दावनप्रवेशवर्णनं नाम चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

---

# अथ पञ्चाशीत्यधिकशततमोऽध्यायः ।

## कालीयदमनाख्यानम्

व्यास उवाच ।

एकदा तु विना रामं कृष्णो वृन्दावनं ययौ ।
विचचार वृतो गोपैर्वन्यपुष्पस्रगुज्ज्वलः ॥ १ ॥
स जगामाथ कालिन्दीं लोलकल्लोलशालिनीम् ।
तीरसंलग्नफेनौघैर्हसन्तीमिव सर्वतः ॥ २ ॥

तस्यां चातिमहाभीमं विषाग्निकणदूषितम् ।
ह्रदं कालीयनागस्य ददर्शातिविभीषिणम् ॥ ३ ॥
विषाग्निना विसरता दग्धतीरमहातरुम् ।
वाताहताम्बुविक्षेपस्पर्शदग्धविहङ्गमम् ॥ ४ ॥
तमतीव महारौद्रं मृत्युवक्त्रमिवापरम् ।
विलोक्य चिन्तयामास भगवान्मधुसूदनः ॥ ५ ॥
अस्मिन्वसति दुष्टात्मा कालीयोऽसौ विषायुधः ।
यो मया निर्जितस्त्यक्त्वा दुष्टो नष्टः पयोनिधौ ॥ ६ ॥
तेनेयं दूषिता सर्वा यमुना सागरंगमा ।
न नरैर्गोधनैर्वाऽपि तृषार्तैरुपभुज्यते ॥ ७ ॥
तदस्य नागराजस्य कर्तव्यो निग्रहो मया ।
नित्यत्रस्ताः सुखं येन चरेयुर्व्रजवासिनः ॥ ८ ॥
एतदर्थं नृलोकेऽस्मिन्नवतारो मयाकृतः ।
यदेषामुत्पथस्थानां कार्या शास्तिर्दुरात्मनाम् ॥ ९ ॥
तदेतन्नातिदूरस्थं कदम्बमुरुशाखिनम् ।
अधिरुह्योत्पतिष्यामि ह्रदेऽस्मिञ्जीवनाशिनः ॥ १० ॥

व्यास उवाच ।

इत्थं विचिन्त्य बद्ध्वा च गाढं परिकरं ततः ।
निपपात ह्रदे तत्र सर्पराजस्य वेगतः ॥ ११ ॥
तेनापि पतता तत्र क्षोभितः स महाह्रदः ।
अत्यर्थदूरजातांश्च तांश्चासिञ्चन्महीरुहान् ॥ १२ ॥

तेऽहिदुष्टविषज्वालातप्ताम्बुतपनोक्षिताः ।
जज्वलुः पादपाः सद्यो ज्वालाव्याप्तदिगन्तराः ॥ १३ ॥
आस्फोटयामास तदा कृष्णो नागह्रदं भुजैः ।
तच्छब्दश्रवणाच्चाथ नागराजोऽभ्युपागमत् ॥ १४ ॥
आताम्रनयनः कोपाद्विषज्वालाकुलैः फणैः ।
वृतो महाविषैश्चान्यैररुणैरनिलाशनैः ॥ १५ ॥
नागपत्न्यश्च शतशो हारिहारोपशोभिताः ।
प्रकम्पिततनूत्क्षेपचलत्कुण्डलकान्तयः ॥ १६ ॥
ततः प्रवेष्टितः सर्पैः स कृष्णो भोगबन्धनैः ।
ददंशुश्चापि ते कृष्णं विषज्वालाविलैर्मुखैः ॥ १७ ॥
तं तत्र पतितं दृष्ट्वा नागभोगनिपीडितम् ।
गोपा व्रजमुपागत्य चुक्रुशुः शोकलालसाः ॥ १८ ॥

गोपा ऊचुः ।

एष कृष्णो गतो मोहमग्नो वै कालिये ह्रदे ।
भक्ष्यते सर्पराजेन तदागच्छत मा चिरम् ॥ १९ ॥

व्यास उवाच ।

एतच्छ्रुत्वा ततो गोपा वज्रपातोपमं वचः ।
गोप्यश्च त्वरिता जग्मुर्यशोदाप्रमुखा ह्रदम् ॥ २० ॥
हा हा क्वासाविति जनो गोपीनामतिविह्वलः ।
यशोदया समं भ्रान्तो द्रुतः प्रस्खलितो ययौ ॥ २१ ॥
नन्दगोपश्च गोपाश्च रामश्चाद्भुतविक्रमः ।
त्वरितं यमुनां जग्मुः कृष्णदर्शनलालसाः ॥ २२ ॥

ददृशुश्चापि ते तत्र सर्पराजवशंगतम् ।
निष्प्रयत्नं कृतं कृष्णं सर्पभोगेन वेष्टितम् ॥ २३ ॥
नन्दगोपश्च निश्चेष्टः पश्यन्पुत्रमुखं भृशम् ।
यशोदा च महाभागा बभूव मुनिसत्तमाः ॥ २४ ॥
गोप्यस्त्वन्या रुदत्यश्च ददृशुः शोककातराः ।
प्रोचुश्च केशवं प्रीत्या भयकातरगद्गदम् ॥ २५ ॥
सर्वा यशोदया सार्धं विशामोऽत्र महाह्रदे ।
नागराजस्य नो गन्तुमस्माकं युज्यते व्रजे ॥ २६ ॥
दिवसः को विना सूर्यं विना चन्द्रेण का निशा ।
विना दुग्धेन का गावो विना कृष्णेन को व्रजः ॥
विना कृता न यास्यामः कृष्णेनानेन गोकुलम् ॥ २७ ॥

व्यास उवाच ।

इति गोपीवचः श्रुत्वा रौहिणेयो महाबलः ।
उवाच गोपान्विधुरान्विलोक्य स्तिमितेक्षणः ॥ २८ ॥
नन्दं च दीनमत्यर्थं न्यस्तदृष्टिं सुतानने ।
मूर्छाकुलां यशोदां च कृष्णमाहात्म्यसंज्ञया ॥ २९ ॥

बलराम उवाच ।

किमयं देवदेवेश भावोऽयं मानुषस्त्वया ।
व्यज्यते स्वं तमात्मानं किमन्यं त्वं न वेत्सि यत् ॥ ३० ॥
त्वमस्य जगतो नाभिः सुराणामेव चाऽऽश्रयः ।
कर्ताऽपहर्ता पाता च त्रैलोक्यं त्वं त्रयीमयः ॥ ३१ ॥

अत्रावतीर्णयोः कृष्ण गोपा एव हि बान्धवाः ।
गोप्यश्च सीदतः कस्मात्त्वं बन्धून्समुपेक्षसे ॥ ३२ ॥
दर्शितो मानुषो भावो दर्शितं बालचेष्टितम् ।
तदयं दम्यतां कृष्ण दुरात्मा दशनायुधः ॥ ३३ ॥

व्यास उवाच ।

इति संस्मारितः कृष्णः स्मितभिन्नौष्ठसंपुटः ।
आस्फाल्य मोचयामास स्वं देहं भोगबन्धनात् ॥ ३४ ॥
अनाम्य चापि हस्ताभ्यामुभाभ्यां मध्यमं फणम् ।
आरुह्य भुग्नशिरसः प्रननर्तोरुविक्रमः ॥ ३५ ॥
व्रणाः फणेऽभवंस्तस्य कृष्णस्याङ्घ्रिविकुट्टनैः ।
यत्रोन्नतिं च कुरुते ननामास्य ततः शिरः ॥ ३६ ॥
मूर्छामुपाययौ भ्रान्त्या नागः कृष्णस्य कुट्टनैः ।
दण्डपातनिपातेन ववाम रुधिरं बहु ॥ ३७ ॥
तं निर्भुग्नशिरोग्रीवमास्यं प्रस्रुतशोणितम् ।
विलोक्य शरणं जग्मुस्तत्पत्न्यो मधुसूदनम् ॥ ३८ ॥

नागपत्न्य ऊचुः ।

ज्ञातोऽसि देवदेवेश सर्वेशस्त्वमनुत्तम ।
परं ज्योतिरचिन्त्यं यत्तदंशः परमेश्वरः ॥ ३९ ॥
न समर्थाः सुर स्तोतुं यमनन्यभवं प्रभुम् ।
स्वरूपवर्णनं तस्य कथं योषित्करिष्यति ॥ ४० ॥
यस्याखिलमहीव्योमजलाग्निपवनात्मकम् ।
ब्रह्माण्डमल्पकांशांशः स्तोष्यामस्तं कथं वयम् ॥ ४१ ॥

६९—

ततः कुरु जगत्स्वामिन्प्रसादमवसीदतः ।
प्राणांस्त्यजति नागोऽयं भर्तृभिक्षा प्रदीयताम् ॥ ४२ ॥

व्यास उवाच ।

इत्युक्ते ताभिराश्वास्य क्लान्तदेहोऽपि पन्नगः ।
प्रसीद देवदेवेति प्राह वाक्यं शनैः शनैः ॥ ४३ ॥

कालीय उवाच ।

तवाष्टगुणमैश्वर्यं नाथ स्वाभाविकं परम् ।
निरस्तातिशयं यस्य तस्य स्तोष्यामि किन्वहम् ॥ ४४ ॥
त्वं परस्त्वं परस्याऽऽद्यः परं त्वं तत्परात्मकम् ।
परस्मात्परमो यस्त्वं तस्य स्तोष्यामि किन्वहम् ॥ ४५ ॥
यथाऽहं भवता सृष्टो जात्या रूपेण चेश्वरः ।
स्वभावेन च संयुक्तस्तथेदं चेष्टितं मया ॥ ४६ ॥
यद्यन्यथा प्रवर्तेय देवदेव ततो मयि ।
न्याय्यो दण्डनिपातस्ते तवैव वचनं यथा ॥ ४७ ॥
तथाऽपि यं जगत्स्वामी दण्डं पातितवान्मयि ।
स सोढोऽयं वरो दण्डस्त्वत्तो नान्योऽस्तु मे वरः ॥ ४८ ॥
हतवीर्यो हतविषो दमितोऽहं त्वयाऽच्युत ।
जीवितं दीयतामेकमाज्ञापय करोमि किम् ॥ ४९ ॥

श्री भगवानुवाच ।

नात्र स्थेयं त्वया सर्प कदाचिद्यमुनाजले ।
सभृत्यपरिवारस्त्वं समुद्रसलिलं व्रज ॥ ५० ॥

मत्पदानि च ते सर्प दृष्ट्वा मूर्धनि सागरे ।
गरुडः पन्नगरिपुस्त्वयि न प्रहरिष्यति ॥ ५१ ॥

व्यास उवाच ।

इत्युक्त्वा सर्पराजानं मुमोच भगवान्हरिः ।
प्रणम्य सोऽपि कृष्णाय जगाम पयसांनिधिम् ॥ ५२ ॥
पश्यतां सर्वभूतानां सभृत्यापत्यबन्धवः ।
समस्तभार्यासहितः परित्यज्य स्वकं ह्रदम् ॥ ५३ ॥
गते सर्पे परिष्वज्य मृतं पुनरिवाऽऽगतम् ।
गोपा मूर्धनि गोविन्दं सिषिचुर्नेत्रजैर्जलैः ॥ ५४ ॥
कृष्णमक्लिष्टकर्माणमन्ये विस्मितचेतसः ।
तुष्टुवुर्मुदिता गोपा दृष्ट्वा शिवजलां नदीम् ॥ ५५ ॥
गीयमानोऽथ गोपीभिश्चरितैश्चारुचेष्टितैः ।
संस्तूयमानो गोपालैः कृष्णो व्रजमुपागमत् ॥ ५६ ॥

इति श्रीमहापुराणे आदिब्राह्मे बालचरिते कालीयदमननिरूपणं नाम पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

---

## अथ षडशीत्यधिकशततमोऽध्यायः ।

### धेनुकवधाख्यानम्

व्यास उवाच ।

गाः पालयन्तौ च पुनः सहितौ रामकेशवौ ।
भ्रममाणौ वने तत्र रम्यं तालवनं गतौ ॥ १ ॥

तच्च तालवनं नित्यं धेनुको नाम दानवः ।
नृगोमांसकृताहारः सदाऽध्यास्ते खराकृतिः ॥ २ ॥
तत्र तालवनं रम्यं फलसंपत्समन्वितम् ।
दृष्ट्वा स्पृहान्विता गोपाः फलादानेऽब्रुवन्वचः ॥ ३ ॥

गोपा ऊचुः ।

हे राम हे कृष्ण सदा धेनुकेनैव रक्ष्यते ।
भूप्रदेशो यतस्तस्मात्त्यक्तानीमानि सन्ति वै ॥ ४ ॥
फलानि पश्य तालानां गन्धमोदयुतानि वै ।
वयमेतान्यभीप्सामः पात्यन्तां यदि रोचते ॥ ५ ॥
इति गोपकुमाराणां श्रुत्वा संकर्षणो वचः ।
कृष्णश्च पातयामास भुवि तालफलानि वै ॥ ६ ॥
तालानां पततां शब्दमाकर्ण्यासुरराट्ततः ।
आजगाम स दुष्टात्मा कोपाद्दैतेयगर्दभः ॥ ७ ॥
पद्भ्यामुभाभ्यां स तदा पश्चिमाभ्यां च तं बली ।
जघानोरसि ताभ्यां च स च तेनाप्यगृह्यत ॥ ८ ॥
गृहीत्वा भ्रामणेनैव चाम्बरे गतजीवितम् ।
तस्मिन्नेव प्रचिक्षेप वेगेन तृणराजनि ॥ ९ ॥
ततः फलान्यनेकानि तालाग्रान्निपतन्खरः ।
पृथिव्यां पातयामास महावातोऽम्बुदानिव ॥ १० ॥
अन्यानप्यस्य वै ज्ञातीनागतान्दैत्यगर्दभान् ।
कृष्णश्चिक्षेप तालाग्रे बलभद्रश्च लीलया ॥ ११ ॥

क्षणेनालंकृता पृथ्वी पक्वैस्तालफलैस्तदा ।
दैत्यगर्दभदेहैश्च मुनयः शुशुभेऽधिकम् ॥ १२ ॥
ततो गावो निराबाधास्तस्मिंस्तालवने द्विजाः ।
नवशष्पं सुखं चेरुर्यत्र भुक्तमभूत्पुरा ॥ १३ ॥

इति श्रीमहापुराणे आदिब्राह्मे बालचरिते धेनुकवधवर्णनं नाम षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

---

## अथ सप्ताशीत्यधिकशततमोऽध्यायः ।

### रामकृष्णकृतबहुविधलीलावर्णनम्

व्यास उवाच ।

तस्मिन्रासभदैतेये सानुजे विनिपातिते ।
सर्वगोपालगोपीनां रम्यं तालवनं बभौ ॥ १ ॥
ततस्तौ जातहर्षौ तु वसुदेवसुतावुभौ ।
शुशुभाते महात्मानौ बालशृङ्गाविवर्षभौ ॥ २ ॥
चारयन्तौ च गा दूरे व्याहरन्तौ च नामभिः ।
नियोगपाशस्कन्धौ तौ वनमालाविभूषितौ ॥ ३ ॥
सुवर्णाञ्जनचूर्णाभ्यां तदा तौ भूषिताम्बरौ ।
महेन्द्रायुधसंकाशौ श्वेतकृष्णाविवाम्बुदौ ॥ ४ ॥
चेरतुर्लोकसिद्धाभिः क्रीडाभिरितरेतरम् ।
समस्तलोकनाथानां नाथभूतौ भुवं गतौ ॥ ५ ॥

राज्यमुर्वी बलं कोशो मित्रपक्षस्तथाऽऽत्मजाः ।
भार्या भृत्यजना ये च शब्दाद्या विषयाः प्रभो ॥ ३८ ॥
सुखबुद्ध्या मया सर्वं गृहीतमिदमव्यय ।
परिणामे च देवेश तापात्मकमभून्मम ॥ ३९ ॥
देवलोकगतिं प्राप्तो नाथ देवगणोऽपि हि ।
मत्तः साहाय्यकामोऽभूच्छाश्वती कुत्र निर्वृतिः ॥ ४० ॥
त्वामनाराध्य जगतां सर्वेषां प्रभवास्पदम् ।
शाश्वती प्राप्यते केन परमेश्वर निर्वृतिः ॥ ४१ ॥
त्वन्मायामूढमनसो जन्ममृत्युजरादिकान् ।
अवाप्य पापान्पश्यन्ति प्रेतराजानमन्तरा ॥ ४२ ॥
ततः पाशशतैर्बद्धा नरकेष्वतिदारुणम् ।
प्राप्नुवन्ति महद्दुःखं विश्वरूपमिदं तव ॥ ४३ ॥
अहमत्यन्तविषयी मोहितस्तव मायया ।
ममत्वागाधगर्तान्ते भ्रमामि परमेश्वर ॥ ४४ ॥

सोऽहं त्वां शरणमपारमीशमीड्यं,
संप्राप्तः परमपदं यतो न किंचित् ।
संसारश्रमपरितापतप्तचेता
निर्विण्णे परिणतधाम्नि साभिलाषः ॥ ४५ ॥

इति श्रीमहापुराणे आदिब्राह्मे कालयवनवधे मुचुकुन्दस्तुति-
निरूपणं नाम षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

——

# अथ सप्तनवत्यधिकशततमोऽध्यायः ।

## गोकुले बलप्रत्यागमनवर्णनम्

व्यास उवाच ।

इत्थं स्तुतस्तदा तेन मुचुकुन्देन धीमता ।
प्राहेशः सर्वभूतानामनादिनिधनो हरिः ॥ १ ॥

श्रीकृष्ण उवाच ।

यथाऽभिवाञ्छिताँल्लोकान्दिव्यान्गच्छ नरेश्वर ।
अव्याहतपरैश्वर्यो मत्प्रसादोपबृंहितः ॥ २ ॥
भुक्त्वा दिव्यान्महाभोगान्भविष्यसि महाकुले ।
जातिस्मरो मत्प्रसादात्ततो मोक्षमवाप्स्यसि ॥ ३ ॥

व्यास उवाच ।

इत्युक्तः प्रणिपत्येशं जगतामच्युतं नृपः ।
गुहामुखाद्विनिष्क्रान्तो ददृशे सोऽल्पकान्नरान् ॥ ४ ॥
ततः कलियुगं ज्ञात्वा प्राप्तं तप्तुं ततो नृपः ।
नरनारायणस्थानं प्रययौ गन्धमादनम् ॥ ५ ॥
कृष्णोऽपि घातयित्वाऽरिमुपायेन हि तद्बलम् ।
जग्राह मथुरामेत्य हस्त्यश्वस्यन्दनोज्ज्वलम् ॥ ६ ॥
आनीय चोग्रसेनाय द्वारवत्यां न्यवेदयत् ।
पराभिभवनिःशङ्कं बभूव च यदोः कुलम् ॥ ७ ॥
बलदेवोऽपि विप्रेन्द्राः प्रशान्ताखिलविग्रहः ।
ज्ञातिदर्शनसोत्कण्ठः प्रययौ नन्दगोकुलम् ॥ ८ ॥

ततो गोपाश्च गोप्यश्च यथापूर्वममित्रजित् ।
तथैवाभ्यवदत्प्रेम्णा बहुमानपुरःसरम् ॥ ९ ॥
कैश्चापि संपरिष्वक्तः कांश्चित्स परिषस्वजे ।
हासं चक्रे समं कैश्चिद्गोपगोपीजनैस्तथा ॥ १० ॥
प्रियाण्यनेकान्यवदन्गोपास्तत्र हलायुधम् ।
गोप्यश्च प्रेममुदिताः प्रोचुः सेर्ष्यमथापराः ॥ ११ ॥
गोप्यः पप्रच्छुरपरा नागरीजनवल्लभः ।
कच्चिदास्ते सुखं कृष्णश्चलत्प्रेमरसाकुलः ॥ १२ ॥
अस्मच्चेष्टोपहसनं न कच्चित्पुरयोषिताम् ।
सौभाग्यमानमधिकं करोति क्षणसौहृदः ॥ १३ ॥
कच्चित्स्मरति नः कृष्णो गीतानुगमनं कृतम् ।
अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति ॥ १४ ॥
अथवा किं तदालापैः क्रियन्तामपराः कथाः ।
यदस्माभिर्विना तेन(तस्य) विनाऽस्माकं भविष्यति ॥ १५ ॥
पिता माता तथा भ्राता भर्ता बन्धुजनश्च कः ।
न त्यक्तस्तत्कृतेऽस्माभिरकृतज्ञस्ततो हि सः ॥ १६ ॥
तथाऽपि कच्चिदात्मीयमिहाऽऽगमनसंश्रयम् ।
करोति कृष्णो वक्तव्यं भवता वचनामृतम् ॥ १७ ॥
दामोदरोऽसौ गोविन्दः पुरस्त्रीसक्तमानसः ।
अपेतप्रीतिरस्मासु दुर्दर्शः प्रतिभाति नः ॥ १८ ॥

व्यास उवाच ।

आमन्त्रितः स कृष्णेति पुनर्दामोदरेति च ।
जहसुः सुस्वरं गोप्यो हरिणा कृष्टचेतसः ॥ १९ ॥

संदेशैः सौम्यमधुरैः प्रेमगर्भैरगर्वितैः ।
रामेणाऽऽश्वासिता गोप्यः कृष्णस्यातिमधुस्वरैः ॥ २० ॥
गोपैश्च पूर्ववद्रामः परिहासमनोहरैः ।
कथाश्चकार प्रेम्णा च सह तैर्व्रजभूमिषु ॥ २१ ॥
इति श्रीमहापुराणे आदिब्राह्मे गोकुले बलप्रत्यागमनवर्णनं नाम
सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

——

## अथाष्टनवत्यधिकशततमोऽध्यायः ।

### हलक्रीडावर्णनम्

व्यास उवाच ।

वने विहरतस्तस्य सह गोपैर्महात्मनः ।
मानुषच्छद्मरूपस्य शेषस्य धरणीभृतः ॥ १ ॥
निष्पादितोरुकार्यस्य कार्येणैवावतारिणः ।
उपभोगार्थमत्यर्थं वरुणः प्राह वारुणीम् ॥ २ ॥

वरुण उवाच ।

अभीष्टां सर्वदा ह्यस्य मदिरे त्वं महौजसः ।
अनन्तस्योपभोगाय तस्य गच्छ मुदे शुभे ॥ ३ ॥

व्यास उवाच ।

इत्युक्ता वारुणी तेन संनिधानमथाकरोत् ।
वृन्दावनतटोत्पन्नकदम्बतरुकोटरे ॥ ४ ॥

विचरन्बलदेवोऽपि मदिरागन्धमुद्धतम् ।
आघ्राय मदिराहर्षमवापाथ पुरातनम् ॥ ५ ॥

ततः कदम्बात्सहसा मद्यधारां स लाङ्गली ।
पतन्तीं वीक्ष्य मुनयः प्रययौ परमां मुदम् ॥ ६ ॥

पपौ च गोपगोपीभिः समवेतो मुदाऽन्वितः ।
उपगीयमानो ललितं गीतवाद्यविशारदैः ॥ ७ ॥

श्रमतोऽत्यन्तघर्माम्भःकणिकामौक्तिकोज्ज्वलः ।
आगच्छ यमुने स्नातुमिच्छामीत्याह विह्वलः ॥ ८ ॥

तस्य वाचं नदी सा तु मत्तोक्तामवमन्य वै ।
नाऽऽजगाम ततः क्रुद्धो हलं जग्राह लाङ्गली ॥ ९ ॥

गृहीत्वा तां तटेनैव चकर्ष मदविह्वलः ।
पापे नाऽऽयासि नाऽऽयासि गम्यतामिच्छयाऽन्यतः ॥ १० ॥

सा कृष्टा तेन सहसा मार्गं संत्यज्य निम्नगा ।
यत्राऽऽस्ते बलदेवोऽसौ प्लावयामास तद्वनम् ॥ ११ ॥

शरीरिणी तथोपेत्य त्रासविह्वललोचना ।
प्रसीदेत्यब्रवीद्रामं मुञ्च मां मुशलायुध ॥ १२ ॥

सोऽब्रवीदवजानासि मम शौर्यबलं यदि ।
सोऽहं त्वां हलपातेन नयिष्यामि सहस्रधा ॥ १३ ॥

व्यास उवाच ।

इत्युक्तयाऽतिसंत्रस्तस्तया नद्या प्रसादितः ।
भूभागे प्लाविते तत्र मुमोच यमुनां बलः ॥ १४ ॥

तत: स्नातस्य वै कान्तिराजगाम महावने ।
अवतंसोत्पलं चारु गृहीत्वैकं च कुण्डलम् ॥ १५ ॥
वरुणप्रहितां चास्मै मालामम्लानपङ्कजाम् ।
समुद्रार्हे तथा वस्त्रे नीले लक्ष्मीरयच्छत ॥ १६ ॥
कृतावतंसः स तदा चारुकुण्डलभूषितः ।
नीलाम्बरधरः स्रग्वी शुशुभे कान्तिसंयुतः ॥ १७ ॥
इत्थं विभूषितो रेमे तत्र रामस्तदा व्रजे ।
मासद्वयेन यातश्च पुनः स मथुरां पुरीम् ॥ १८ ॥
रेवतीं चैव तनयां रैवतस्य महीपतेः ।
उपयेमे बलस्तस्यां जज्ञाते निशठोल्मुकौ ॥ १९ ॥

इति श्रीमहापुराणे आदिब्राह्मे हलक्रीडावर्णनं नामाष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

——

## अथ नवनवत्यधिकशततमोऽध्यायः ।

### रुक्मिणीविवाहवर्णनम्

व्यास उवाच ।

भीष्मकः कुण्डिने राजा विदर्भविषयेऽभवत् ।
रुक्मिणी तस्य दुहिता रुक्मी चैव सुतो द्विजाः ॥ १ ॥
रुक्मिणीं चकमे कृष्णः सा च तं चारुहासिनी ।
न ददौ याचते चैनां रुक्मी द्वेषेण चक्रिणे ॥ २ ॥

ददौ स शिशुपालाय जरासंधप्रचोदितः ।
भीष्मको रुक्मिणा सार्धं रुक्मिणीमुरुविक्रमः ॥ ३ ॥
विवाहार्थं ततः सर्वे जरासंधमुखा नृपाः ।
भीष्मकस्य पुरं जग्मुः शिशुपालश्च कुण्डिनम् ॥ ४ ॥
कृष्णोऽपि बलभद्राद्यैर्यदुभिः परिवारितः ।
प्रययौ कुण्डिनं द्रष्टुं विवाहं चैद्यभूपतेः ॥ ५ ॥
श्वोभाविनि विवाहे तु तां कन्यां हृतवान्हरिः ।
विपक्षभावमासाद्य रामाद्येष्वेव बन्धुषु ॥ ६ ॥
ततश्च पौण्ड्रकः श्रीमान्दन्तवक्त्रो विदूरथः ।
शिशुपालो जरासंधः शाल्वाद्याश्च महीभृतः ॥ ७ ॥
कुपितास्ते हरिं हन्तुं चक्रुरुद्योगमुत्तमम् ।
निर्जिताश्च समागम्य रामाद्यैर्यदुपुंगवैः ॥ ८ ॥
कुण्डिनं न प्रवेक्ष्यामि अहत्वा युधि केशवम् ।
कृत्वा प्रतिज्ञां रुक्मी च हन्तुं कृष्णमभिद्रुतः ॥ ९ ॥
हत्वा बलं स नागाश्वपत्तिस्यन्दनसंकुलम् ।
निर्जितः पातितश्चोर्व्यां लीलयैव स चक्रिणा ॥ १० ॥
निर्जित्य रुक्मिणं सम्यगुपयेमे स रुक्मिणीम् ।
राक्षसेन विधानेन संप्राप्तो मधुसूदनः ॥ ११ ॥
तस्यां जज्ञे च प्रद्युम्नो मदनांशः स वीर्यवान् ।
जहार शम्बरो यं वै यो जघान च शम्बरम् ॥ १२ ॥

इति श्रीमहापुराणे आदिब्राह्मे श्रीकृष्णचरिते नवनवत्यधिक-
शततमोऽध्यायः ॥ १९९ ॥

——

# अथ द्विशततमोऽध्यायः ।

## प्रद्युम्नाख्यानवर्णनम्

मुनय ऊचुः ।

शम्बरेण हृतो वीरः प्रद्युम्नः स कथं पुनः ।
शम्बरश्च महावीर्यः प्रद्युम्नेन कथं हतः ॥ १ ॥

व्यास उवाच ।

षष्ठेऽह्नि जातमात्रे तु प्रद्युम्नं सूतिकागृहात् ।
ममैष हन्तेति द्विजा हृतवान्कालशम्बरः ॥ २ ॥
नीत्वा चिक्षेप चैवैनं ग्राहोऽग्रे लवणार्णवे ।
कल्लोलजनितावर्ते सुघोरे मकरालये ॥ ३ ॥
पतितं चैव तत्रैको मत्स्यो जग्राह बालकम् ।
न ममार च तस्यापि जठरानलदीपितः ॥ ४ ॥
मत्स्यबन्धैश्च मत्स्योऽसौ मत्स्यैरन्यैः सह द्विजाः ।
घातितोऽसुरवर्याय शम्बराय निवेदितः ॥ ५ ॥
तस्य मायावती नाम पत्नी सर्वगृहेश्वरी ।
कारयामास सूदानामाधिपत्यमनिन्दिता ॥ ६ ॥
दारिते मत्स्यजठरे ददृशे साऽतिशोभनम् ।
कुमारं मन्मथतरोर्दग्धस्य प्रथमाङ्कुरम् ॥ ७ ॥
कोऽयं कथमयं मत्स्यजठरे समुपागतः ।
इत्येवं कौतुकाविष्टां तां तन्वीं प्राह नारदः ॥ ८ ॥

नारद उवाच ।

अयं समस्तजगतां सृष्टिसंहारकारिणा ।
शम्बरेण हृतः कृष्णतनयः सूतिकागृहात् ॥ ९ ॥
क्षिप्तः समुद्रे मत्स्येन निगीर्णस्ते वशं गतः ।
नररत्नमिदं सुभ्रु विश्रब्धा परिपालय ॥ १० ॥

व्यास उवाच ।

नारदेनैव मुक्ता सा पालयामास तं शिशुम् ।
बाल्यादेवातिरागेण रूपातिशयमोहिता ॥ ११ ॥
स यदा यौवनाभोगभूषितोऽभूद्द्विजोत्तमाः ।
साभिलाषा तदा सा तु बभूव गजगामिनी ॥ १२ ॥
मायावती ददौ चास्मै माया सर्वा महात्मने ।
प्रद्युम्नायाऽऽत्मभूताय तन्न्यस्तहृदयेक्षणा ॥
प्रसज्जन्तीं तु तामाह स कार्ष्णिः कमललोचनः ॥ १३ ॥

प्रद्युम्न उवाच ।

मातृभावं विहायैव किमर्थं वर्तसेऽन्यथा ॥ १४ ॥

व्यास उवाच ।

सा चास्मै कथयामास न पुत्रस्त्वं ममेति वै ।
तनयं त्वामयं विष्णोर्हृतवान्कालशम्बरः १५ ॥
क्षिप्तः समुद्रे मत्स्यस्य संप्राप्तो जठरान्मया ।
सा तु रोदिति ते माता कान्ताऽद्याप्यतिवत्सला ॥ १६ ॥

व्यास उवाच ।

इत्युक्तः शम्बरं युद्धे प्रद्युम्नः स समाह्वयत् ।
क्रोधाकुलीकृतमना युयुधे च महाबलः ॥ १७ ॥

हत्वा सैन्यमशेषं तु तस्य दैत्यस्य माधविः।
सप्त माया व्यतिक्रम्य मायां संयुयुजेऽष्टमीम् ॥ १८ ॥
तया जघान तं दैत्यं मायया कालशम्बरम्।
उत्पत्य च तया सार्धमाजगाम पितुः पुरम् ॥ १९ ॥
अन्तःपुरे च पतितं मायावत्या समन्वितम्।
तं दृष्ट्वा हृष्टसंकल्पा बभूवुः कृष्णयोषितः ॥
रुक्मिणी चाब्रवीत्प्रेम्णाऽऽसक्तदृष्टिरनिन्दिता ॥ २० ॥

रुक्मिण्युवाच ।

धन्यायाः खल्वयं पुत्रो वर्तते नवयौवने।
अस्मिन्वयसि पुत्रो मे प्रद्युम्नो यदि जीवति ॥ २१ ॥
सभाग्या जननी वत्स त्वया काऽपि विभूषिता।
अथवा यादृशः स्नेहो मम यादृग्वपुश्च ते ॥
हरेरपत्यं सुव्यक्तं भवान्वत्स भविष्यति ॥ २२ ॥

व्यास उवाच ।

एतस्मिन्नन्तरे प्राप्तः सह कृष्णेन नारदः।
अन्तःपुरवरां देवीं रुक्मिणीं प्राह हर्षितः ॥ २३ ॥

श्रीकृष्ण उवाच ।

एष ते तनयः सुभ्रु हत्वा शम्बरमागतः।
हृतो येनाभवत्पूर्वं पुत्रस्ते सूतिकागृहात् ॥ २४ ॥
इयं मायावती भार्या तनयस्यास्य ते सती।
शम्बरस्य न भार्येयं श्रूयतामत्र कारणम् ॥ २५ ॥

मन्मथे तु गते नाशं तदुद्भवपरायणा।
शम्बरं मोहयामास मायारूपेण रुक्मिणि ॥ २६ ॥
विवाहाद्युपभोगेषु रूपं मायामयं शुभम्।
दर्शयामास दैत्यस्य तस्येयं मदिरेक्षणा ॥ २७ ॥
कामोऽवतीर्णः पुत्रस्ते तस्येयं दयिता रतिः।
विशङ्का नात्र कर्तव्या स्नुषेयं तव शोभना ॥ २८ ॥

व्यास उवाच।

ततो हर्षसमाविष्टौ रुक्मिणीकेशवौ तदा।
नगरी च समस्ता सा साधु साध्वित्यभाषत ॥ २९ ॥
चिरं नष्टेन पुत्रेण संगतां प्रेक्ष्य रुक्मिणीम्।
अवाप विस्मयं सर्वो द्वारवत्यां जनस्तदा ॥ ३० ॥
इति श्रीमहापुराणे आदिब्राह्मे शम्बरहृतप्रद्युम्नागमनवर्णनं नाम द्विशततमोऽध्यायः ॥ २०० ॥

---

# अथैकाधिकद्विशततमोऽध्यायः।

## अनिरुद्धविवाहेरुक्मिवधनिरूपणम्

व्यास उवाच।

चारुदेष्णं सुदेष्णं च चारुदेहं च शोभनम्।
सुषेणं(विचारुं) चारुगुप्तं च भद्रचारुं तथाऽपरम् ॥ १ ॥

चारुविन्दं(चन्द्रं) सुचारुं च चारुंच बलिनां वरम् ।
रुक्मिण्यजनयत्पुत्रान्कन्यां चारुमतीं तथा ॥ २ ॥
अन्याश्च भार्याः कृष्णस्य बभूवुः सप्त शोभनाः ।
कालिन्दी मित्रविन्दा च सत्या नाग्नजिती तथा ॥ ३ ॥
देवी जाम्बवती चापि सदा तुष्टा तु रोहिणी ।
मद्रराजसुता चान्या सुशीला शीलमण्डला ॥ ४ ॥
सात्राजिती सत्यभामा लक्ष्मणा चारुहासिनी ।
षोडशात्र सहस्राणि स्त्रीणामन्यानि चक्रिणः ॥ ५ ॥
प्रद्युम्नोऽपि महावीर्यो रुक्मिणस्तनयां शुभाम् ।
स्वयंवरस्थां जग्राह साऽपि तं तनयं हरेः ॥ ६ ॥
तस्यामस्याभवत्पुत्रो महाबलपराक्रमः ।
अनिरुद्धो रणे रुद्धो वीर्योदधिररिंदमः ॥ ७ ॥
तस्यापि रुक्मिणः पौत्री वरयामास केशवः ।
दौहित्राय ददौ रुक्मी स्पर्धयन्नपि शौरिणा ॥ ८ ॥
तस्या विवाहे रामाद्या यादवा हरिणा सह ।
रुक्मिणो नगरं जग्मुर्नाम्ना भोजकटं द्विजाः ॥ ६ ॥
विवाहे तत्र निर्वृत्ते प्राद्युम्नेः सुमहात्मनः ।
कलिङ्गराजप्रमुखा रुक्मिणं वाक्यमब्रुवन् ॥ १० ॥

कलिङ्गादय ऊचुः ।

अनक्षज्ञो हली द्यूते तथाऽस्य व्यसनं महत् ।
तन्न(ज्ज)यामो बलं तस्माद्द्यूतेनैव महाद्युते ॥ ११ ॥

व्यास उवाच ।

तथेति तानाह नृपान्रुक्मी बलसमन्वितः ।
सभायां सह रामेण चक्रे द्यूतं च वै तदा ॥ १२ ॥
सहस्रमेकं निष्काणां रुक्मिणा विजितो बलः ।
द्वितीये दिवसे चान्यत्सहस्रं रुक्मिणा जितः ॥ १३ ॥
ततो दश सहस्राणि निष्काणां पणमाददे ।
बलभद्रप्रपन्नानि रुक्मी द्यूतविदां वरः ॥ १४ ॥
ततो जहासाथ बलं कलिङ्गाधिपतिर्द्विजाः ।
दन्तान्विदर्शयन्मूढो रुक्मी चाऽऽह मदोद्धतः ॥ १५ ॥

रुक्म्युवाच ।

अविद्योऽयं महाद्यूते बलभद्रः पराजितः ।
मृषैवाक्षावलेपत्वाद्योऽयं मेनेऽक्षकोविदम् ॥ १६ ॥
दृष्ट्वा कलिङ्गराजं तु प्रकाशदशनाननम् ।
रुक्मिणं चापि दुर्वाक्यं कोपं चक्रे हलायुधः ॥ १७ ॥

व्यास उवाच ।

ततः कोपपरीतात्मा निष्ककोटिं हलायुधः ।
ग्लहं जग्राह रुक्मी च ततस्त्वक्षानपातयत् ॥ १८ ॥
अजयद्बलदेवोऽथ प्राहोच्चैस्तं जितं मया ।
ममेति रुक्मी प्राहोच्चैरलीकोक्तैरलं बलम् ॥ १९ ॥
त्वयोक्तोऽयं ग्लहः सत्यं न ममैषोऽनुमोदितः ।
एवं त्वया चेद्विजितं न मया विजितं कथम् ॥ २० ॥

ततोऽन्तरिक्षे वागुच्चैः प्राह गम्भीरनादिनी ।
बलदेवस्य तं कोपं वर्धयन्ती महात्मनः ॥ २१ ॥

आकाशवागुवाच ।

जितं तु बलदेवेन रुक्मिणा भाषितं मृषा ।
अनुक्त्वा वचनं किंचित्कृतं भवति कर्मणा ॥ २२ ॥

व्यास उवाच ।

ततो बलः समुत्थाय क्रोधसंरक्तलोचनः ।
जघानाष्टापदेनैव रुक्मिणं स महाबलः ॥ २३ ॥
कलिङ्गराजं चाऽऽदाय विस्फुरन्तं बलाद्बलः ।
बभञ्ज दन्तान्कुपितो यैः प्रकाशं जहास सः ॥ २४ ॥
आकृष्य च महास्तम्भं जातरूपमयं बलः ।
जघान ये तत्पक्षास्तान्भूभृतः कुपितो बलः ॥ २५ ॥
ततो हाहाकृतं सर्वं पलायनपरं द्विजाः ।
तद्राजमण्डलं सर्वं बभूव कुपिते बले ॥ २६ ॥
बलेन निहतं श्रुत्वा रुक्मिणं मधुसूदनः ।
नोवाच वचनं किंचिद्रुक्मिणीबलयोर्भयात् ॥ २७ ॥
ततोऽनिरुद्धमादाय कृतोद्वाहं द्विजोत्तमाः ।
द्वारकामाजगामाथ यदुचक्रं सकेशवम् ॥ २८ ॥

इति श्रीमहापुराणे आदिब्राह्मेऽनिरुद्धविवाहे रुक्मिवधनिरूपणं नामैकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

——

# अथ द्व्यधिकद्विशततमोऽध्यायः।

## नरकवधवर्णनम्

व्यास उवाच ।

द्वारवत्यां ततः शौरिं शक्रस्त्रिभुवनेश्वरः ।
आजगामाथ मुनयो मत्तैरावतपृष्ठगः ॥ १ ॥
प्रविश्य द्वारकां सोऽथ समीपे च हरेस्तदा ।
कथयामास दैत्यस्य नरकस्य विचेष्टितम् ॥ २ ॥

इन्द्र उवाच ।

त्वया नाथेन देवानां मनुष्यत्वेऽपि तिष्ठता ।
प्रशमं सर्वदुःखानि नीतानि मधुसूदन ॥ ३ ॥
तपस्विजनरक्षार्थं सोऽरिष्टो धेनुकस्तथा ।
प्रलम्बाद्यास्तथा केशी ते सर्वे निहतास्त्वया ॥ ४ ॥
कंसः कुवलयापीडः पूतना बालघातिनी ।
नाशं नीतास्त्वया सर्वे येऽन्ये जगदुपद्रवाः ॥ ५ ॥
युष्मद्दोर्दण्डसंबुद्धिपरित्राते जगत्त्रये ।
यज्ञे यज्ञहविः प्राश्य तृप्तिं यान्ति दिवौकसः ॥ ६ ॥
सोऽहं सांप्रतमायातो यन्निमित्तं जनार्दन ।
तच्छ्रुत्वा तत्प्रतीकारप्रयत्नं कर्तुमर्हसि ॥ ७ ॥
भौमोऽयं नरको नाम प्राग्ज्योतिषपुरेश्वरः ।
करोति सर्वभूतानामपघातमरिंदम ॥ ८ ॥

देवसिद्धसुरादीनां नृपाणां च जनार्दन।
हत्वा तु सोऽसुरः कन्या रुरोध निजमन्दिरे ॥ ९ ॥
छत्रं यत्सलिलस्रावि तज्जहार प्रचेतसः।
मन्दरस्य तथा शृङ्गं हृतवान्मणिपर्वतम् ॥ १० ॥
अमृतस्राविणी दिव्ये मातुर्मेऽमृतकुण्डले।
जहार सोऽसुरोऽदित्या वाञ्छत्यैरावतं द्विपम् ॥ ११ ॥
दुर्नीतमेतद्गोविन्द मया तस्य तवोदितम्।
यदत्र प्रतिकर्तव्यं तत्स्वयं परिमृश्यताम् ॥ १२ ॥

व्यास उवाच।

इति श्रुत्वा स्मितं कृत्वा भगवान्देवकीसुतः।
गृहीत्वा वासवं हस्ते समुत्तस्थौ वरासनात् ॥ १३ ॥
संचिन्तितमुपारुह्य गरुडं गगनेचरम्।
सत्यभामां समारोप्य ययौ प्राग्ज्योतिषं पुरम् ॥ १४ ॥
आरुह्यैरावतं नागं शक्रोऽपि त्रिदशालयम्।
ततो जगाम सुमनाः पश्यतां द्वारकौकसाम् ॥ १५ ॥
प्राग्ज्योतिषपुरस्यास्य समन्ताच्छतयोजनम्।
आचितं भैरवैः पाशैः परसैन्यनिवारणे ॥ १६ ॥
तांश्चिच्छेद हरिः पाशान्क्षिप्त्वा चक्रं सुदर्शनम्।
ततो मुरः समुत्तस्थौ तं जघान च केशवः ॥ १७ ॥
मुरोस्तु(रस्य) तनयान्सप्त सहस्रास्तां(सा तां)स्ततो हरिः।
चक्रधाराग्निनिर्दग्धांश्चकार शलभानिव ॥ १८ ॥

हत्वा मुरं हयग्रीवं तथा पञ्चजनं द्विजाः ।
प्राग्ज्योतिषपुरं धीमांस्त्वरावान्समुपाद्रवत् ॥ १९ ॥
नरकेनास्य तत्राभून्महासैन्येन संयुगः ।
कृष्णस्य यत्र गोविन्दो जघ्ने दैत्यान्सहस्रशः ॥ २० ॥
शस्त्रास्त्रवर्षं मुञ्चन्तं स भौमं नरकं बली ।
क्षिप्त्वा चक्रं द्विधा चक्रे चक्री दैतेयचक्रहा ॥ २१ ॥
हते तु नरके भूमिर्गृहीत्वाऽदितिकुण्डले ।
उपतस्थे जगन्नाथं वाक्यं चेदमथाब्रवीत् ॥ २२ ॥

धरण्युवाच ।

यदाऽहमुद्धृता नाथ त्वया शूकरमूर्तिना ।
त्वत्संस्पर्शभवः पुत्रस्तदाऽयं मय्यजायत ॥ २३ ॥
सोऽयं त्वयैव दत्तो मे त्वयैव विनिपातितः ।
गृहाण कुण्डले चेमे पालयास्य च संततिम् ॥ २४ ॥
भारावतरणार्थाय ममैव भगवानिमम् ।
अंशेन लोकमायातः प्रसादसुमुख प्रभो ॥ २५ ॥
त्वं कर्ता च विकर्ता च संहर्ता प्रभवोऽव्ययः ।
जगत्स्वरूपो यश्च त्वं स्तूयसेऽच्युत किं मया ॥ २६ ॥
व्यापी व्याप्यः क्रिया कर्ता कार्यं च भगवान्सदा ।
सर्वभूतात्मभूतात्मा स्तूयसेऽच्युत किं मया ॥ २७ ॥
परमात्मा त्वमात्मा च भूतात्मा चाव्ययो भवान् ।
यदा तदा स्तुतिर्नास्ति किमर्थं ते प्रवर्तताम् ॥ २८ ॥

प्रसीद सर्वभूतात्मन्नरकेन कृतं च यत् ।
तत्क्षम्यतामदोषाय मत्सुतः स निपातितः ॥ २९ ॥

व्यास उवाच ।

तथेति चोक्त्वा धरणीं भगवान्भूतभावनः ।
रत्नानि नरकावासाज्जग्राह मुनिसत्तमाः ॥ ३० ॥
कन्यापुरे स कन्यानां षोडशातुलविक्रमः ।
शताधिकानि ददृशे सहस्राणि द्विजोत्तमाः ॥ ३१ ॥
चतुर्दंष्ट्रान्गजांश्चोग्रान्षट्सहस्राणि दृष्टवान् ।
काम्बोजानां तथाऽश्वानां नियुतान्येकविंशतिम् ॥ ३२ ॥
कन्यास्ताश्च तथा नागांस्तानश्वान्द्वारकां पुरीम् ।
प्रापयामास गोविन्दः सद्यो नरककिंकरैः ॥ ३३ ॥
ददृशे वारुणं छत्रं तथैव मणिपर्वतम् ।
आरोपयामास हरिर्गरुडे पतगेश्वरे ॥ ३४ ॥
आरुह्य च स्वयं कृष्णः सत्यभामासहायवान् ।
अदित्याः कुण्डले दातुं जगाम त्रिदशालयम् ॥ ३५ ॥

इति श्रीमहापुराणे आदिब्राह्मे कृष्णचरिते नरकवधो नाम
द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

— —

# अथ त्र्यधिकद्विशततमोऽध्यायः

## अदितिकृताभगवत्स्तुतिः

व्यास उवाच ।

गरुडो वारुणं छत्रं तथैव मणिपर्वतम् ।
सभार्यं च हृषीकेशं लीलयैव वहन्ययौ ॥ १ ॥
ततः शङ्खमुपाध्माय स्वर्गद्वारं गतो हरिः ।
उपतस्थुस्ततो देवाः सार्घपात्रा जनार्दनम् ॥ २ ॥
स देवैरर्चितः कृष्णो देवमातुर्निवेशनम् ।
सिताभ्रशिखराकारं प्रविश्य ददृशेऽदितिम् ॥ ३ ॥
स तां प्रणम्य शक्रेण सहितः कुण्डलोत्तमे ।
ददौ नरकनाशं च शशंसास्यै जनार्दनः ॥ ४ ॥
ततः प्रीता जगन्माता धातारं जगतां हरिम् ।
तुष्टावादितिरव्यग्रं कृत्वा तत्प्रवणं मनः ॥ ५ ॥

अदितिरुवाच ।

नमस्ते पुण्डरीकाक्ष भक्तानामभयंकर ।
सनातनात्मन्भूतात्मन्सर्वात्मन्भूतभावन ॥ ६ ॥
प्रणेतर्मनसो बुद्धेरिन्द्रियाणां गुणात्मक ।
सितदीर्घादिनिःशेषकल्पनापरिवर्जित ॥ ७ ॥
जन्मादिभिरसंस्पृष्टस्वप्नादिपरिवर्जितः ।
संध्या रात्रिरहर्भूमिर्गगनं वायुरम्बु च ॥ ८ ॥

हुताशनो मनो बुद्धिर्भूतादिस्त्वं तथाऽच्युत ।
सृष्टिस्थितिविनाशानां कर्ता कर्तृपतिर्भवान् ॥ ९ ॥
ब्रह्मविष्णुशिवाख्याभिरात्ममूर्तिभिरीश्वरः ।
मायाभिरेतद्व्याप्तं ते जगत्स्थावरजङ्गमम् ॥ १० ॥
अनात्मन्यात्मविज्ञानं सा ते माया जनार्दन ।
अहं ममेति भावोऽत्र यया समुपजायते ॥ ११ ॥
संसारमध्ये मायायास्तवैतन्नाथ चेष्टितम् ।
यैः स्वधर्मपरैर्नाथ नरैराधितो भवान् ॥ १२ ॥
ते तरन्त्यखिलामेतां मायामात्मविमुक्तये ।
ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा ॥ १३ ॥
विष्णुमायामहावर्ते मोहान्धतमसाऽऽवृताः ।
आराध्य त्वामभीप्सन्ते कामानात्मभवक्षये ॥ १४ ॥
पद्दे ते पुरुषा बद्धा मायया भगवंस्तव ।
मया त्वं पुत्रकामिन्या वैरिपक्षक्षयाय च ॥ १५ ॥
आराधितो न मोक्षाय मायाविलसितं हि तत् ।
कौपीनाच्छादनप्राया वाञ्छा कल्पद्रुमादपि ॥ १६ ॥
जायते यदपुण्यानां सोऽपराधः स्वदोषजः ।
तत्प्रसीदाखिलजगन्मायामोहकराव्यय ॥ १७ ॥
अज्ञानं ज्ञानसद्भाव भूतभूतेश नाशय ।
नमस्ते चक्रहस्ताय शार्ङ्गहस्ताय ते नमः ॥ १८ ॥
गदाहस्ताय ते विष्णो शङ्खहस्ताय ते नमः ।
एतत्पश्यामि ते रूपं स्थूलचिह्नोपशोभितम् ॥

न जानामि परं यत्तप्रसीद परमेश्वर ॥ १६ ॥

व्यास उवाच ।

अदित्यैवं स्तुतो विष्णुः प्रहस्याऽऽह सुरारणिम् ॥ २० ॥

श्रीकृष्ण उवाच ।

माता देवि त्वमस्माकं प्रसीद वरदा भव ॥ २१ ॥

अदितिरुवाच ।

एवमस्तु यथेच्छा ते त्वमशेषसुरासुरैः ।
अजेयः पुरुषव्याघ्र मर्त्यलोके भविष्यसि ॥ २२ ॥

व्यास उवाच ।

ततोऽनन्तरमेवास्य शक्राणीसहितां दितिम् ।
सत्यभामा प्रणम्याऽऽह प्रसीदेति पुनः पुनः ॥ २३ ॥

अदितिरुवाच ।

मत्प्रसादान्न ते सुभ्रु जरा वरूप्यमेव च ।
भविष्यत्यनवद्यांङ्गि सर्वकामा भविष्यसि ॥ २४ ॥

व्यास उवाच ।

अदित्या तु कृतानुज्ञो देवराजो जनार्दनम् ।
यथावत्पूजयामास बहुमानपुरःसरम् ॥ २५ ॥
ततो ददर्श कृष्णोऽपि सत्यभामासहायवान् ।
देवोद्यानानि सर्वाणि नन्दनादीनि सत्तमाः ॥ २६ ॥

ददर्श च सुगन्धाढ्यं मञ्जरीपुञ्जधारिणम् ।
शैत्याह्लादकरं दिव्यं ताम्रपल्लवशोभितम् ॥ २७ ॥
मथ्यमानेऽमृते जातं जातरूपसमप्रभम् ।
पारिजातं जगन्नाथः केशवः केशिसूदनः ॥
तं दृष्ट्वा प्राह गोविन्दं सत्यभामा द्विजोत्तमाः ॥ २८ ॥

सत्यभामोवाच ।

कस्मान्न द्वारकामेष नीयते कृष्ण पादपः ।
यदि ते तद्वचः सत्यं सत्याऽत्यर्थं प्रियेति मे ॥ २६ ॥
मद्गृहे निष्कुटार्थाय तदयं नीयतां तरुः ।
न मे जाम्बवती तादृगभीष्टा न च रुक्मिणी ॥ ३० ॥
सत्ये यथा त्वमित्युक्तं त्वया कृष्णासकृत्प्रियम् ।
सत्यं तद्यदि गोविन्द नोपचारकृतं वचः ॥ ३१ ॥
तदस्तु पारिजातोऽयं मम गेहविभूषणम् ।
बिभ्रती पारिजातस्य केशपाशेन मञ्जरीम् ।
सपत्नीनामहं मध्ये शोभेयमिति कामये ॥ ३२ ॥

व्यास उवाच ।

इत्युक्तः स प्रहस्यैनं पारिजातं गरुत्मति ।
आरोपयामास हरिस्तमूचुर्वनरक्षिणः ॥ ३३ ॥

वनपाला ऊचुः ।

भोः शची देवराजस्य महिषी तत्परिग्रहम् ।
पारिजातं न गोविन्द हर्तुमर्हसि पादपम् ॥ ३४ ॥

७४—

शचीविभूषणार्थाय देवैरमृतमन्थने ।
उत्पादितोऽयं न क्षेमी गृहीत्वैनं गमिष्यसि ॥ ३५ ॥
मौढ्यात्प्रार्थयसे क्षेमी गृहीत्वैनं च को व्रजेत् ।
अवश्यमस्य देवेन्द्रो विकृतिं कृष्ण यास्यति ॥ ३६ ॥
वज्रोद्यतकरं शक्रमनुयास्यन्ति चामराः ।
तदलं सकलैर्देवैर्विग्रहेण तवाच्युत ॥
विपाककटु यत्कर्म न तच्छंसन्ति पण्डिताः ॥ ३७ ॥

व्यास उवाच ।

इत्युक्ते तै रुवाचैतान्सत्यभामाऽतिकोपिनी ॥ ३८ ॥

सत्यभामोवाच ।

का शची पारिजातस्य को वा शक्रः सुराधिपः ।
सामान्यः सर्वलोकानां यद्यषोऽमृतमन्थने ॥ ३९ ॥
समुत्पन्नः पुरा कस्मादेको गृह्णाति वासवः ।
यथा सुरा यथा चेन्दुर्यथा श्रीर्वनरक्षिणः ॥ ४० ॥
सामान्यः सर्वलोकस्य पारिजातस्तथा द्रुमः ।
भर्तृबाहुमहागर्वाद्रुणद्ध्येनमथो शची ॥ ४१ ॥
तत्कथ्यतां द्रुतं गत्वा पौलोम्या वचनं मम ।
सत्यभामा वदत्येवं भर्तृगर्वोद्धताक्षरम् ॥ ४२ ॥
यदि त्वं दयिता भर्तुर्यदि तस्य प्रिया ह्यसि ।
मद्भर्तुर्हरतो वृक्षं तत्कारय निवारणम् ॥ ४३ ॥
जानामि ते पतिं शक्रं जानामि त्रिदशेश्वरम् ।
पारिजातं तथाऽप्येनं मानुषी हारयामि ते ॥ ४४ ॥

व्यास उवाच ।

इत्युक्ता रक्षिणो गत्वा प्रोच्चैः प्रोचुर्यथोदितम् ।
शची चोत्साहयामास त्रिदशाधिपतिं पतिम् ॥ ४५ ॥

ततः समस्तदेवानां सैन्यैः परिवृतो हरिम् ।
प्रवृत्तः पारिजातार्थमिन्द्रो योधयितुं द्विजाः ४६ ॥

ततः परिघनिस्त्रिंशगदाशूलधरायुधाः ।
बभूवुस्त्रिदशाः सज्जाः शक्रे वज्रकरे स्थिते ॥ ४७ ॥

ततो निरीक्ष्य गोविन्दो नागराजोपरि स्थितम् ।
शक्रं देवपरीवारं युद्धाय समुपस्थितम् ॥ ४८ ॥

चकार शङ्खनिर्घोषं दिशः शब्देन पूरयन् ।
मुमोच च शरव्रातं सहस्रायुतसंमितम् ॥ ४९ ॥

ततो दिशो नभश्चैव दृष्ट्वा शरशताचितम् ।
मुमुचुस्त्रिदशाः सर्वे शस्त्राण्यस्त्राण्यनेकशः ॥ ५० ॥

एकैकमस्त्रं शस्त्रं च देवैर्मुक्तं सहस्रधा ।
चिच्छेद लीलयैवेशो जगतां मधुसूदनः ॥ ५१ ॥

पाशं सलिलराजस्य समाकृष्योरगाशनः ।
चचाल खण्डशः कृत्वा बालपन्नगदेहवत् ॥ ५२ ॥

यमेन प्रहितं दण्डं गदाप्रक्षेपखण्डितम् ।
पृथिव्यां पातयामास भगवान्देवकीसुतः ॥ ५३ ॥

शिबिकां च धनेशस्य चक्रेण तिलशो विभुः ।
चकार शौरिरर्केन्दू दृष्टिपातहतौजसौ ॥ ५४ ॥

नीतोऽग्निः शतशो बाणैर्द्राविता वसवो दिशः ।
चक्रविच्छिन्नशूलाग्रा रुद्रा भुवि निपातिताः ॥ ५५ ॥
साध्या विश्वे च मरुतो गन्धर्वाश्चैव सायकैः ।
शार्ङ्गिणा प्रेरिताः सर्वे व्योम्नि शाल्मलितूलवत् ॥ ५६ ॥
गरुडश्चापि वक्त्रेण पक्षाभ्यां च नखाङ्कुरैः ।
भक्षयन्नहनद्देवान्दानवांश्च सदा खगः ॥ ५७ ॥
ततः शरसहस्रेण देवेन्द्रमधुसूदनौ ।
परस्परं ववर्षाते धाराभिरिव तोयदौ ॥ ५८ ॥
ऐरावतेन गरुडो युयुधे तत्र संकुले ।
देवैः समेतैर्युयुधे शक्रेण च जनार्दनः ॥ ५९ ॥
छिन्नेषु शीर्यमाणेषु शस्त्रेष्वस्त्रेषु सत्वरम् ।
जग्राह वासवो वज्रं कृष्णश्चक्रं सुदर्शनम् ॥ ६० ॥
ततो हाहाकृतं सर्वं त्रैलोक्यं सचराचरम् ।
वज्रचक्रधरौ दृष्ट्वा देवराजजनार्दनौ ॥ ६१ ॥
क्षिप्तं वज्रमथेन्द्रेण जग्राह भगवान्हरिः ।
न मुमोच तदा चक्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ६२ ॥
प्रनष्टवज्रं देवेन्द्रं गरुडक्षतवाहनम् ।
सत्यभामाऽब्रवीद्वाक्यं पलायनपरायणम् ॥ ६३ ॥

सत्यभामोवाच ।

त्रैलोक्येश्वर नो युक्तं शचीभर्तुः पलायनम् ।
पारिजातस्रगाभोगात्त्वामुपस्थास्यते शची ॥ ६४ ॥

कीदृशं देव राज्यं ते पारिजातस्रगुज्ज्वलाम् ।
अपश्यतो यथापूर्वं प्रणयाभ्यागतां शचीम् ॥ ६५ ॥
अलं शक्र प्रयासेन न व्रीडां यातुमर्हसि ।
नीयतां पारिजातोऽयं देवाः सन्तु गतव्यथाः ॥ ६६ ॥
पतिगर्वावलेपेन बहुमानपुरःसरम् ।
न ददर्श गृहायातामुपचारेण मां शची ॥ ६७ ॥
स्त्रीत्वादगुरुचित्ताऽहं स्वभर्तुः श्लाघनापरा ।
ततः कृतवती शक्र भवता सह विग्रहम् ॥ ६८ ॥
तदलं पारिजातेन परस्वेन हृतेन वा ।
रूपेण यशसा चैव भवेत्स्त्री का न गर्विता ॥ ६९ ॥

व्यास उवाच ।

इत्युक्ते वै निववृते देवराजस्तया द्विजाः ।
प्राह चैनामलं चण्डि सखि खेदातिविस्तरैः ॥ ७० ॥
न चाऽपि सर्गसंहारस्थितिकर्ताऽखिलस्य यः ।
जितस्य तेन मे व्रीडा जायते विश्वरूपिणा ॥ ७१ ॥

यस्मिञ्जगत्सकलमेतदनादिमध्ये,
यस्माद्यतश्च न भविष्यति सर्वभूतात् ।
तेनोद्भवप्रलयपालनकारणेन,
व्रीडा कथं भवति देवि निराकृतस्य ॥ ७२ ॥
सकलभुवनमूर्तेर्मूर्तिरल्पा सुसूक्ष्मा,
विदितसकलदेवैर्ज्ञायते यस्य नान्यैः ।

तमजमकृतमीशं शाश्वतं स्वेच्छयैनं,
जगदुपकृतिमाद्यं को विजेतुं समर्थः ॥ ७३ ॥

इति श्री महापुराणे आदिब्राह्मे पारिजातहरणे शक्रस्तवनिरूपणं नाम त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

---

# अथ चतुरधिकद्विशततमोऽध्यायः ।

## इन्द्रकृष्णसंवादवर्णनम्

व्यास उवाच ।

संस्तुतो भगवानित्थं देवराजेन केशवः ।
प्रहस्य भावगम्भीरमुवाचेदं द्विजोत्तमाः ॥ १ ॥

श्री भगवानुवाच ।

देवराजो भवानिन्द्रो वयं मर्त्या जगत्पते ।
क्षन्तव्यं भवतैवैतदपराधकृतं मम ॥ २ ॥
पारिजाततरुश्चायं नीयतामुचितास्पदम् ।
गृहीतोऽयं मया शक्र सत्यावचनकारणात् ॥ ३ ॥
वज्रं चेदं गृहाण त्वं यद्‌व्यं प्रहितं त्वया ।
तवैवैतत्प्रहरणं शक्रवैरिविदारणम् ॥ ४ ॥

शक्र उवाच ।

विमोहयसि मामीश मर्त्योऽहमिति किं वदन् ।
जानीमस्त्वां भगवतोऽनन्तसौख्यविदो वयम् ॥ ५ ॥

योऽसि सोऽसि जगन्नाथ प्रवृत्तौ नाथ संस्थितः ।
जगतः शल्यनिष्कर्षं करोष्यसुरसूदन ॥ ६ ॥
नीयतां पारिजातोऽयं कृष्ण द्वारवतीं पुरीम् ।
मर्त्यलोके त्वया मुक्ते नायं संस्थास्यते भुवि ॥ ७ ॥

व्यास उवाच ।

तथेत्युक्त्वा तु देवेन्द्रमाजगाम भुवं हरिः ।
प्रयुक्तैः सिद्धगन्धर्वैः स्तूयमानस्त्वथर्षिभिः ॥ ८ ॥
जगाम कृष्णः सहसा गृहीत्वा पादपोत्तमम् ।
ततः शङ्खमुपाध्माय द्वारकोपरि संस्थितः ॥ ९ ॥
हर्षमुत्पादयामास द्वारकावासिनां द्विजाः ।
अवतीर्याथ गरुडात्सत्यभामासहायवान् ॥ १० ॥
निष्कुटे स्थापयामास पारिजातं महातरुम् ।
यमभ्येत्य जनः सर्वो जातिं स्मरति पौर्विकीम् ॥ ११ ॥
वास्यते यस्य पुष्पाणां गन्धेनोर्वी त्रियोजनम् ।
ततस्ते यादवाः सर्वे देवगन्धानमानुषान् ॥ १२ ॥
ददृशुः पादपे तस्मिन्कुर्वतो मुखदर्शनम् ।
किंकरैः समुपानीतं हस्त्यश्वादि ततो धनम् ॥ १३ ॥
स्त्रियश्च कृष्णो जग्राह नरकस्य परिग्रहात् ।
ततः काले शुभे प्राप्त उपयेमे जनार्दनः ॥ १४ ॥
ताः कन्या नरकावासात्सर्वतो याः समाहृताः ।
एकस्मिन्नेव गोविन्दः कालेनाऽऽसां द्विजोत्तमाः ॥ १५ ॥

जग्राह विधिवत्पाणीन्पृथग्देहे स्वधर्मतः ।
षोडश स्त्रीसहस्राणि शतमेकं तथाऽधिकम् ॥ १६ ॥
तावन्ति चक्रे रूपाणि भगवान्मधुसूदनः ।
एकैकशश्च ताः कन्या मेनिरे मधुसूदनम् ॥ १७ ॥
ममैव पाणिग्रहणं गोविन्दः कृतवानिति ।
निशासु जगतः स्रष्टा तासां गेहेषु केशवः ॥
उवास विप्राः सर्वासां विश्वरूपधरो हरिः ॥ १८ ॥
इति श्रीमहापुराणे आदिब्राह्मे श्रीकृष्णचरिते चतुरधिक-
द्विशततमोऽध्यायः ॥ २०४ ॥

---

# अथ पञ्चाधिकद्विशततमोऽध्यायः ।

## अनिरुद्धचरित्रवर्णनम्

व्यास उवाच ।

प्रद्युम्नाद्या हरेः पुत्रा रुक्मिण्यां कथिता द्विजाः ।
भान्वादिकांश्च वै पुत्रान्सत्यभामा व्यजायत ॥ १ ॥
दीप्तिमन्तः प्रपक्षाद्या रोहिण्यास्तनया हरेः ।
बभूवुर्जाम्बवत्याश्च साम्बाद्या बाहुशालिनः ॥ २ ॥
तनया भद्रविन्दाद्या नाग्नजित्यां महाबलाः ।
संग्रामजित्प्रधानास्तु शैब्यायां चाभवन्सुताः ॥ ३ ॥
वृकाद्यास्तु सुता माद्री गात्रवत्प्रमुखान्सुतान् ।
अवाप लक्ष्मणा पुत्रान्कालिन्द्याश्च श्रुतादयः ॥ ४ ॥

अन्यासां चैव भार्याणां समुत्पन्नानि चक्रिणः ।
अष्टायुतानि पुत्राणां सहस्राणि शतं तथा ॥ ५ ॥
प्रद्युम्नः प्रमुखस्तेषां रुक्मिण्यास्तु सुतस्ततः ।
प्रद्युम्नानिरुद्धोऽभूद्वज्रस्तस्मादजायत ॥ ६ ॥
अनिरुद्धो रणे रुद्धो बलेः पौत्रीं महाबलः ।
बाणस्य तनयामू(मु)षामुपयेमे द्विजोत्तमाः ॥ ७ ॥
यत्र युद्धमभूद्घोरं हरिशंकरयोर्महत् ।
छिन्नं सहस्रं बाहूनां यत्र बाणस्य चक्रिणा ॥ ८ ॥

मुनय ऊचुः ।

कथं युद्धमभूद्ब्रह्मन्नुषार्थे हरकृष्णयोः ।
कथं क्षयं च बाणस्य बाहूनां कृतवान्हरिः ॥ ९ ॥
एतत्सर्वं महाभाग वक्तुमर्हसि नोऽखिलम् ।
महत्कौतूहलं जातं श्रोतुमेतां कथां शुभाम् ॥ १० ॥

व्यास उवाच ॥

उषा बाणसुता विप्राः पार्वतीं शंभुना सह ।
क्रीडन्तीमुपलक्ष्योच्चैः स्पृहां चक्रे तदा स्वयम् ॥
ततः सकलचित्तज्ञा गौरी तामाह भामिनीम् ॥ ११ ॥

गौर्युवाच ।

अलमित्यनुतापेन भर्त्रा त्वमपि रंस्यसे ॥ १२ ॥

व्यास उवाच ।

इत्युक्ता सा तदा चक्रे कदेति मतिमात्मनः ।
को वा भर्ता ममेत्येनां पुनरप्याह पार्वती ॥ १३ ॥

पार्वत्युवाच ।

वैशाखे शुक्लद्वादश्यां स्वप्ने योऽभिभवं तव ।
करिष्यति स ते भर्ता राजपुत्रि भविष्यति ॥ १४ ॥

व्यास उवाच ।

तस्यां तिथौ पुमान्स्वप्ने यथा देव्या उदीरितः ।
तथैवाभिभवं चक्रे रागं चक्रे च तत्र सा ॥
ततः प्रबुद्धा पुरुषमपश्यन्ती तमुत्सुका ॥ १५ ॥

उषोवाच ।

क्व गतोऽसीति निर्लज्जा द्विजाश्चोक्तवती सखीम् ।
बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा तु तत्सुता ॥ १६ ॥
तस्याः सख्यभवत्सा च प्राह कोऽयं त्वयोच्यते ।
यदा लज्जाकुला नास्य कथयामास सा सखी ॥ १७ ॥
तदा विश्वासमानीय सर्वमेवान्ववेदयत् ।
विदितायां तु तामाह पुनरूषा यथोदितम् ॥
देव्या तथैव तत्प्राप्तौ योऽभ्युपायः कुरुष्व तम् ॥ १८ ॥

व्यास उवाच ।

ततः पटे सुरान्दैत्यान्गन्धर्वांश्च प्रधानतः ।
मनुष्यांश्चाभिलिख्यासौ चित्रलेखाऽप्यदर्शयत् ॥ १९ ॥
अपास्य सा तु गन्धर्वांस्तथोरगसुरासुरान् ।
मनुष्येषु ददौ दृष्टिं तेष्वप्यन्धकवृष्णिषु ॥ २० ॥
कृष्णरामौ विलोक्याऽऽसीत्सुभ्रूर्लज्जायतेक्षणा ।
प्रद्युम्नदर्शने व्रीडादृष्टिं निन्ये ततो द्विजाः ॥ २१ ॥

दृष्ट्वाऽनिरुद्धं च ततो लज्जा क्वापि निराकृता।
सोऽयं सोऽयं ममेत्युक्ते तया सा योगगामिनी॥
ययौ द्वारवतीमू(मु)षां समाश्वास्य ततः सखी॥ २२॥

इति श्रीमहापुराणे आदिब्राह्मे बाणयुद्धे पञ्चाधिक-
द्विशततमोऽध्यायः॥ २०५॥

---

# अथ षडधिकद्विशततमोऽध्यायः।

## बाणयुद्धवर्णनम्

व्यास उवाच।

बाणोऽपि प्रणिपत्याग्रे ततश्चाऽऽह त्रिलोचनम्॥ १॥

बाण उवाच।

देव बाहुसहस्रेण निर्विण्णोऽहं विनाऽऽहवम्।
कच्चिन्ममैषां बाहूनां साफल्यकरणो रणः॥
भविष्यति विना युद्धं भाराय मम किं भुजैः॥ २॥

शंकर उवाच।

मयूरध्वजभङ्गस्ते यदा बाण भविष्यति।
पिशिताशिजनानन्दं प्राप्स्यसि त्वं तदा रणम्॥ ३॥

व्यास उवाच।

ततः प्रणम्य मुदितः शंभुमभ्यागतो गृहात्।
भग्नं ध्वजमथाऽऽलोक्य हृष्टो हर्षं परं ययौ॥ ४॥

एतस्मिन्नेव काले तु योगविद्याबलेन तम् ।
अनिरुद्धमथाऽऽनिन्ये चित्रलेखा वरा सखी ॥ ५ ॥
कन्यान्तःपुरमध्ये तं रममाणं सहोषया ।
विज्ञाय रक्षिणो गत्वा शशंसुर्दैत्यभूपतेः ॥ ६ ॥
व्यादिष्टं किंकराणां तु सैन्यं तेन महात्मना ।
जघान परिघं लौहमादाय परवीरहा ॥ ७ ॥
हतेषु तेषु बाणोऽपि रथस्थस्तद्वधोद्यतः ।
युध्यमानो यथाशक्ति यदा वीरेण निर्जितः ॥ ८ ॥
मायया युयुधे तेन स तदा मन्त्रचोदितः ।
ततश्च पन्नगास्त्रेण बबन्ध यदुनन्दनम् ॥ ९ ॥
द्वारवत्यां क यातोऽसावनिरुद्धेति जल्पताम् ।
यदूनामाचचक्षे तं बद्धं बाणेन नारदः ॥ १० ॥
तं शोणितपुरे श्रुत्वा नीतं विद्याविदग्धया ।
योषिता प्रत्ययं जग्मुर्यादवा नाम वैरिति(णि) ॥ ११ ॥
ततो गरुडमारुह्य स्मृतमात्रा गतं हरिः ।
बलप्रद्युम्नसहितो बाणस्य प्रययौ पुरम् ॥ १२ ॥
पुरीप्रवेशे प्रमथैर्युद्धमासीन्महाबलैः ।
ययौ बाणपुराभ्याशं नीत्वा तान्संक्षयं हरिः ॥ १३ ॥
ततस्त्रिपादस्त्रिशिरा ज्वरो माहेश्वरो महान् ।
बाणरक्षार्थमत्यर्थं युयुधे शार्ङ्गधन्वना ॥ १४ ॥
तद्भस्मस्पर्शसंभूततापं कृष्णाङ्गसंगमात् ।
अवाप बलदेवोऽपि समं संमीलितेक्षणः ॥ १५ ॥

ततः संयुध्यमानस्तु सह देवेन शार्ङ्गिणा ।
वैष्णवेन ज्वरेणाऽऽशु कृष्णदेहान्निराकृतः ॥ १६ ॥
नारायणभुजाघातपरिपीडनविह्वलम् ।
तं वीक्ष्य क्षम्यतामस्येत्याह देवः पितामहः ॥ १७ ॥
ततश्च क्षान्तमेवेति प्रोच्य तं वैष्णवं ज्वरम् ।
आत्मन्येव लयं निन्ये भगवान्मधुसूदनः ॥ १८ ॥
मम त्वया समं युद्धं ये स्मरिष्यन्ति मानवाः ।
विज्वरास्ते भविष्यन्तीत्युक्त्वा चैनं ययौ हरिः ॥ १९ ॥
ततोऽग्नीन्भगवान्पञ्च जित्वा नीत्वा क्षयं तथा ।
दानवानां बलं विष्णुश्चूर्णयामास लीलया ॥ २० ॥
ततः समस्तसैन्येन दैतेयानां बलेः सुतः ।
युयुधे शंकरश्चैव कार्तिकेयश्च शौरिणा ॥ २१ ॥
हरिशंकरयोर्युद्धमतीवाऽऽसीत्सुदारुणम् ।
चुक्षुभुः सकला लोकाः शस्त्रास्त्रैर्बहुधाऽर्दिताः ॥ २२ ॥
प्रलयोऽयमशेषस्य जगतो नूनमागतः ।
मेनिरे त्रिदशा यत्र वर्तमाने महाहवे ॥ २३ ॥
जृम्भणास्त्रेण गोविन्दो जृम्भयामास शंकरम् ।
ततः प्रणेशुर्दैतेयाः प्रमथाश्च समन्ततः ॥ २४ ॥
जृम्भाभिभूतश्च हरो रथोपस्थमुपाविशत् ।
न शशाक तदा योद्धुं कृष्णेनाक्लिष्टकर्मणा ॥ २५ ॥
गरुडक्षतवाहुश्च प्रद्युम्नास्त्रेण पीडितः ।
कृष्णहुंकारनिर्धूतशक्तिश्चापययौ गुहः ॥ २६ ॥

जृम्भिते शंकरे नष्टे दैत्यसैन्ये गुहे जिते ।
नीते प्रथमसैन्ये च संक्षयं शार्ङ्गधन्वना ॥ २७ ॥
नन्दीशसंगृहीताश्वमधिरूढो महारथम् ।
बाणस्तत्राऽऽययौ योद्धुं कृष्णकार्ष्णिबलैः सह ॥ २८ ॥
बलभद्रो महावीर्यो बाणसैन्यमनेकधा ।
विव्याध बाणैः प्रद्युम्नो धर्मतश्चापलायतः ॥ २९ ॥
आकृष्य लाङ्गलाग्रेण मुशलेन च पोथितम् ।
बलं बलेन ददृशे बाणो बाणैश्च चक्रिणः ॥ ३० ॥
ततः कृष्णस्य बाणेन युद्धमासीत्समासतः ।
परस्परं तु संदीप्तान्कायत्राणविभेदिनः ॥ ३१ ॥
कृष्णश्चिच्छेद बाणांस्तान्बाणेन प्रहिताञ्शरैः ।
बिभेद केशवं बाणो बाणं विव्याध चक्रधृक् ॥ ३२ ॥
मुमुचाते तथाऽस्त्राणि बाणकृष्णौ जिगीषया ।
परस्परक्षतिपरौ परिघांश्च ततो द्विजाः ॥ ३३ ॥
छिद्यमानेष्वशेषेषु शस्त्रेष्वस्त्रे च सीदति ।
प्राचुर्येण हरिर्बाणं हन्तुं चक्रे ततो मनः ॥ ३४ ॥
ततोऽर्कशतसंभूततेजसा सदृशद्युति ।
जग्राह दैत्यचक्रारिर्हरिश्चक्रं सुदर्शनम् ॥ ३५ ॥
मुञ्चतो बाणनाशाय तच्चक्रं मधुविद्विषः ।
नग्ना दैतेयविद्याऽभूत्कोटरी पुरतो हरेः ॥ ३६ ॥
तामग्रतो हरिर्दृष्ट्वा मीलिताक्षः सुदर्शनम् ।
मुमोच बाणमुद्दिश्य छेत्तुं बाहुवनं रिपोः ॥ ३७ ॥

क्रमेणास्य तु बाहूनां बाणस्याच्युतचोदितम् ।
छेदं चक्रेऽसुरस्याऽऽशु शस्त्रास्त्रक्षेपणाद्द्रुतम् ॥ ३८ ॥
छिन्ने बाहुवने तत्तु करस्थं मधुसूदनः ।
मुमुक्षुर्बाणनाशाय विज्ञातस्त्रिपुरद्विषा ॥ ३९ ॥
स उत्पत्याऽऽह गोविन्दं सामपूर्वमुमापतिः ।
विलोक्य बाणं दोर्दण्डच्छेदासृक्स्राववर्षिणम् ॥ ४० ॥

रुद्र उवाच ।

कृष्ण कृष्ण जगन्नाथ जाने त्वां पुरुषोत्तमम् ।
परेशं परमात्मानमनादिनिधनं परम् ॥ ४१ ॥
देवतिर्यङ्मनुष्येषु शरीरग्रहणात्मिका ।
लीलेयं तव चेष्टा हि दैत्यानां वधलक्षणा ॥ ४२ ॥
तत्प्रसीदाभयं दत्तं बाणस्यास्य मया प्रभो ।
तत्त्वया नानृतं कार्यं यन्मया व्याहृतं वचः ॥ ४३ ॥
अस्मत्संश्रयवृद्धोऽयं नापराधस्तवाव्यय ।
मया दत्तवरो दैत्यस्ततस्त्वां क्षमयाम्यहम् ॥ ४४ ॥

व्यास उवाच ।

इत्युक्तः प्राह गोविन्दः शूलपाणिमुमापतिम् ।
प्रसन्नवदनो भूत्वा गतामर्षोऽसुरं प्रति ॥ ४५ ॥

श्रीभगवानुवाच ।

युष्मद्दत्तवरो बाणो जीवतादेष शंकर ।
त्वद्वाक्यगौरवादेतन्मया चक्रं निवर्तितम् ॥ ४६ ॥

त्वया यदभयं दत्तं तद्दत्तमभयं मया ।
मत्तोऽविभिन्नमात्मानं द्रष्टुमर्हसि शंकर ॥ ४७ ॥
योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् ।
अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः ॥ ४८ ॥

व्यास उवाच ।

इत्युक्त्वा प्रययौ कृष्णः प्राद्युम्निर्यत्र तिष्ठति ।
तद्बन्धफणिनो नेशुर्गरुडानिलशोषिताः ॥ ४९ ॥
ततोऽनिरुद्धमारोप्य सपत्नीकं गरुत्मति ।
आजग्मुर्द्वारकां रामकार्ष्णिदामोदराः पुरीम् ॥ ५० ॥

इति श्रीमहापुराणे आदिब्राह्मे बाणयुद्धे षडधिकद्वि-
शततमोऽध्यायः ॥ २०६ ॥

---

## अथ सप्ताधिकद्विशततमोऽध्यायः ।

### पौण्ड्रकवधवर्णनम्

मुनय ऊचुः ।

चक्रे कर्ममहच्छौरिर्बिभ्रद्यो मानुषीं तनुम् ।
जिगाय शक्रं शर्वं च सर्वदेवांश्च लीलया ॥ १ ॥
यच्चान्यदकरोत्कर्म दिव्यचेष्टाविघातकृत् ।
कथ्यतां तन्मुनिश्रेष्ठ परं कौतूहलं हि नः ॥ २ ॥

व्यास उवाच ।

गदतो मे मुनिश्रेष्ठाः श्रूयतामिदमादरात् ।
नरावतारे कृष्णेन दग्धा वाराणसी यथा ॥ ३ ॥
पौण्ड्रको वासुदेवश्च वासुदेवोऽभवद्भुवि ।
अवतीर्णस्त्वमित्युक्तो जनैरज्ञानमोहितैः ॥ ४ ॥
स मेने वासुदेवोऽहमवतीर्णो महीतले ।
नष्टस्मृतिस्ततः सर्वं विष्णुचिह्नमचीकरत् ॥
दूतं च प्रेषयामास स कृष्णाय द्विजोत्तमाः ॥ ५ ॥

दूत उवाच ।

त्यक्त्वा चक्रादिकं चिह्नं मदीयं नाम माऽऽत्मनः ।
वासुदेवात्मकं मूढ मुक्त्वा सर्वमशेषतः ॥ ६ ॥
आत्मनो जीवितार्थं च तथा मे प्रणतिं व्रज ॥ ७ ॥

व्यास उवाच ।

इत्युक्तः स प्रहस्यैव दूतं प्राह जनार्दनः ॥ ८ ॥

श्रीभगवानुवाच ।

निजचिह्नमहं चक्रं समुत्स्रक्ष्ये त्वयीति वै ।
वाच्यश्च पौण्ड्रको गत्वा त्वया दूत वचो मम ॥ ९ ॥
ज्ञातस्त्वद्वाक्यसद्भावो यत्कार्यं तद्विधीयतां ।
गृहीतचिह्न एवाहमागमिष्यामि ते पुरम् ॥ १० ॥
उत्स्रक्ष्यामि च ते चक्रं निजचिह्नमसंशयम् ।
आज्ञापूर्वं च यदिदमागच्छेति त्वयोदितम् ॥ ११ ॥

संपादयिष्ये श्वस्तुभ्यं तदप्येषोऽविलम्बितम् ।
शरणं ते समभ्येत्य कर्ताऽस्मि नृपते तथा ॥
यथा त्वत्तो भयं भूयो नैव किंचिद्भविष्यति ॥ १२ ॥

व्यास उवाच ।

इत्युक्तेऽपगते दूते संस्मृत्याभ्यागतं हरिः ।
गरुत्मन्तं समारुह्य त्वरितं तत्पुरं ययौ ॥ १३ ॥
तस्यापि केशवोद्योगं श्रुत्वाकाशिपतिस्तदा ।
सर्वसैन्यपरीवारपार्ष्णिग्राहमुपाययौ ॥ १४ ॥
ततो बलेन महता काशिराजबलेन च ।
पौण्ड्रको वासुदेवोऽसौ केशवाभिमुखं ययौ ॥ १५ ॥
तं ददर्श हरिर्दूरादुदारस्यन्दने स्थितम् ।
चक्रशङ्खगदापाणिं पाणिना विधृताम्बुजम् ॥ १६ ॥
स्रग्धरं धृतशार्ङ्गं च सुपर्णरचनाध्वजम् ।
वक्षस्थलकृतं चास्य श्रीवत्सं ददृशे हरिः ॥ १७ ॥
किरीटकुण्डलधरं पीतवासःसमन्वितम् ।
दृष्ट्वा तं भावगम्भीरं जहास मधुसूदनः ॥ १८ ॥
युयुधे च बलेनास्य हस्त्यश्वबलिना द्विजाः ।
निस्त्रिंशर्ष्टिगदाशूलशक्तिकार्मुकशालिना ॥ १९ ॥
क्षणेन शार्ङ्गनिर्मुक्तैः शरैरग्निविदारणैः ।
गदाचक्रातिपातैश्च सूदयामास तद्बलम् ॥ २० ॥
काशिराजबलं चैव क्षयं नीत्वा जनार्दनः ।
उवाच पौण्ड्रकं मूढमात्मचिह्नोपलक्षणम् ॥ २१ ॥

श्रीभगवानुवाच ।

पौण्ड्रकोक्तं त्वया यत्तद्दूतवक्त्रेण मां प्रति ।
समुत्सृजेति चिह्नानि तत्ते संपादयाम्यहम् ॥ २२ ॥

चक्रमेतत्समुत्सृष्टं गदेयं ते विसर्जिता ।
गरुत्मानेष निर्दिष्टः समारोहतु ते ध्वजम् ॥ २३ ॥

इत्युच्चार्य विमुक्तेन चक्रेणासौ विदारितः ।
पोथितो गदया भग्नो गरुत्मांश्च गरुत्मता ॥ २४ ॥

ततो हाहाकृते लोके काशीनामधिपस्तदा ।
युयुधे वासुदेवेन मित्रस्यापचितौ स्थितः ॥ २५ ॥

ततः शार्ङ्गविनिर्मुक्तैश्छित्त्वा तस्य शरैः शिरः ।
काशिपुर्यां स चिक्षेप कुर्वंल्लोकस्य विस्मयम् ॥ २६ ॥

हत्वा तु पौण्ड्रकं शौरिः काशिराजं च सानुगम् ।
रेमे द्वारवतीं प्राप्तोऽमरः स्वर्गगतो यथा ॥ २७ ॥

तच्छिरः पतितं तत्र दृष्ट्वा काशिपतेः पुरे ।
जनः किमेतदित्याह केनेत्यत्यन्तविस्मितः ॥ २८ ॥

ज्ञात्वा तं वासुदेवेन हतं तस्य सुतस्ततः ।
पुरोहितेन सहितस्तोषयामास शंकरम् ॥ २९ ॥

अविमुक्ते महाक्षेत्रे तोषितस्तेन शंकरः ।
वरं वृणीष्वेति तदा तं प्रोवाच नृपात्मजम् ॥ ३० ॥

स वव्रे भगवन्कृत्या पितुर्हन्तुर्वधाय मे ।
समुत्तिष्ठतु कृष्णस्य त्वत्प्रसादान्महेश्वर ॥ ३१ ॥

व्यास उवाच ।

एवं भविष्यतीत्युक्ते दक्षिणाग्नेरनन्तरम् ।
महाकृत्या समुत्तस्थौ तस्यैवाग्निनिवेशनात् ॥ ३२ ॥
ततो ज्वालाकरालास्या ज्वलत्केशकलापिका ।
कृष्ण कृष्णेति कुपिता कृत्वा द्वारवतीं ययौ ॥ ३३ ॥
तामवेक्ष्य जनः सर्वो रौद्रां विकृतलोचनाम् ।
ययौ शरण्यं जगतां शरणं मधुसूदनम् ॥ ३४ ॥

जना ऊचुः ।

काशिराजसुतेनेयमाराध्य वृषभध्वजम् ।
उत्पादिता महाकृत्या वधाय तव चक्रिणः ॥
जहि कृत्यामिमामुग्रां वह्निज्वालाजटाकुलाम् ॥ ३५ ॥

व्यास उवाच ।

चक्रमुत्सृष्टमक्षेषु क्रीडासक्तेन लीलया ।
तदग्निमालाजटिलं ज्वालोद्गारातिभीषणम् ॥ ३६ ॥
कृत्यामनुजगामाऽऽशु विष्णुचक्रं सुदर्शनम् ।
ततः सा चक्रविध्वस्ता कृत्या माहेश्वरी तदा ॥ ३७ ॥
जगाम वेगिनी वेगात्तदप्यनुजगाम ताम् ।
कृत्या वाराणसीमेव प्रविवेश त्वरान्विता ॥ ३८ ॥
विष्णुचक्रप्रतिहतप्रभावा मुनिसत्तमाः ।
ततः काशिबलं भूरि प्रमथानां तथा बलम् ॥ ३९ ॥
समस्तशस्त्रास्त्रयुतं चक्रस्याभिमुखं ययौ ।
शस्त्रास्त्रमोक्षबहुलं दग्ध्वा तद्बलमोजसा ॥ ४० ॥

कृत्वाऽक्षेमामशेषां तां पुरीं वाराणसीं ययौ ।
प्रभूतभृत्यपौरां तां साश्वमातङ्गमानवाम् ॥ ४१ ॥
अशेषदुर्गकोष्ठां तां दुर्निरीक्ष्यां सुरैरपि ।
ज्वालापरिवृताशेषगृहप्राकारतोरणाम् ॥ ४२ ॥
ददाह तां पुरीं चक्रं सकलामेव सत्वरम् ।
अक्षीणामर्षमत्यल्पसाध्यसाधननिस्पृहम् ॥ ४३ ॥
तच्चक्रं प्रस्फुरद्दीप्ति विष्णोरभ्याययौ करम् ॥ ४४ ॥

इति श्री महापुराणे आदिब्राह्मे श्रीकृष्णचरिते पौण्ड्रकवासुदेव-वधे काशीदाहवर्णनं नाम सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

---

# अथाष्टाधिकद्विशततमोऽध्यायः ।

## बलदेवमाहात्म्यवर्णनम्

मुनय ऊचुः ।

श्रोतुमिच्छामहे भूयो बलभद्रस्य धीमतः ।
मुने पराक्रमं शौर्यं तन्नो व्याख्यातुमर्हसि ॥ १ ॥
यमुनाकर्षणादीनि श्रुतान्यस्माभिरत्र वै ।
तत्कथ्यतां महाभाग यदन्यत्कृतवान्बलः ॥ २ ॥

व्यास उवाच ।

शृणुध्वं मुनयः कर्म यद्रामेणाभवत्कृतम् ।
अनन्तेनाप्रमेयेन शेषेण धरणीभृता ॥ ३ ॥

दुर्योधनस्य तनयां स्वयंवरकृतेक्षणाम् ।
बलादादत्तवान्वीरः साम्बो जाम्बवतीसुतः ॥ ४ ॥
ततः क्रुद्धा महावीर्याः कर्णदुर्योधनादयः ।
भीष्मद्रोणादयश्चैव बबन्धुर्युधि निर्जितम् ॥ ५ ॥
तच्छ्रुत्वा यादवाः सर्वे क्रोधं दुर्योधनादिषु ।
मुनयः प्रतिचक्रुश्च तान्विहन्तुं महोद्यमम् ॥ ६ ॥
तान्निवार्य बलः प्राह मदलोलाकुलाक्षरम् ।
मोक्ष्यन्ति ते मद्वचनाद्यास्याम्येको हि कौरवान् ॥ ७ ॥
बलदेवस्ततो गत्वा नगरं नागसाह्वयम् ।
बाह्योपवनमध्येऽभून्न विवेश च तत्पुरम् ॥ ८ ॥
बलमागतमाज्ञाय तदा दुर्योधनादयः ।
गामर्घमुदकं चैव रामाय प्रत्यवेदयन् ॥
गृहीत्वा विधिवत्सर्वं ततस्तानाह कौरवान् ॥ ९ ॥

बलदेव उवाच ।

आज्ञापयत्युग्रसेनः साम्बमाशु विमुञ्चत ॥ १० ॥

व्यास उवाच ।

ततस्तद्वचनं श्रुत्वा भीष्मद्रोणादयो द्विजाः ।
कर्णदुर्योधनाद्याश्चचुक्रुधुर्द्विजसत्तमाः ॥ ११ ॥
ऊचुश्च कुपिताः सर्वे बाह्लिकाद्याश्च भूमिपाः ।
अराजार्हं यदोर्वंशमवेक्ष्य मुशलायुधम् ॥ १२ ॥

कौरवा ऊचुः ।

भो भोः किमेतद्भवता बलभद्रेरितं वचः ।
आज्ञां कुरुकुलोत्थानां यादवः कः प्रदास्यति ॥ १३ ॥

उग्रसेनोऽपि यद्याज्ञां कौरवाणां प्रदास्यति।
तदलं पाण्डुरैश्छत्त्रैर्नृपयोग्यैरलंकृतैः ॥ १४ ॥
तद्गच्छ बलभद्र त्वं साम्बमन्यायचेष्टितम्।
विमोक्ष्यामो न भवतो नोग्रसेनस्य शासनात् ॥ १५ ॥
प्रणतिर्या कृताऽस्माकं मान्यानां कुकुरान्धकैः।
न नाम सा कृता केयमाज्ञा स्वामिनि भृत्यतः ॥ १६ ॥
गर्वमारोपिता यूयं समानासनभोजनैः।
को दोषो भवतां नीतिर्यत्प्रीणात्यनपेक्षिता ॥ १७ ॥
अस्माभिरर्च्यो भवता योऽयं बल निवेदितः।
प्रेम्णैव न तदस्माकं कुलाद्युष्मत्कुलोचितम् ॥ १८ ॥

व्यास उवाच।

इत्युक्त्वा कुरवः सर्वे नामुञ्चन्त हरेः सुतम्।
कृतैकनिश्चयाः सर्वे विविशुर्गजसाह्वयम् ॥ १९ ॥
मत्तः कोपेन चाऽऽघूर्णं ततोऽधिक्षेपजन्मना।
उत्थाय पार्ष्ण्या वसुधां जघान स हलायुधः ॥ २० ॥
ततो विदारिता पृथ्वी पार्ष्णिघातान्महात्मनः।
आस्फोटयामास तदा दिशः शब्देन पूरयन् ॥
उवाच चातिताम्राक्षो भ्रुकुटीकुटिलाननः ॥ २१ ॥

बलदेव उवाच।

अहो महावलेपोऽयमसाराणां दुरात्मनाम्।
कौरवाणामाधिपत्यमस्माकं किल कालजम् ॥ २२ ॥

उग्रसेनस्य ये नाऽऽज्ञां मन्यन्ते चाप्यलङ्घनाम् ।
आज्ञां प्रतीच्छेद्धर्मेण सह देवैः शचीपतिः ॥ २३ ॥
सदाऽध्यास्ते सुधर्मां तामुग्रसेनः शचीपतेः ।
धिङ्मनुष्यशतोच्छिष्टे तुष्टिरेषां नृपासने ॥ २४ ॥
पारिजाततरोः पुष्पमञ्जरीर्वनिताजनः ।
बिभर्ति यस्य भृत्यानां सोऽप्येषां न महीपतिः ॥ २५ ॥
समस्तभूभुजां नाथ उग्रसेनः स तिष्ठतु ।
अद्य निष्कौरवामुर्वीं कृत्वा यास्यामि तां पुरीम् ॥ २६ ॥
कर्णं दुर्योधनं द्रोणमद्य भीष्मं सबाह्लिकम् ।
दुःशासनादीन्भूरिं च भूरिश्रवसमेव च ॥ २७ ॥
सोमदत्तं शलं भीममर्जुनं सयुधिष्ठिरम् ।
यमजौ कौरवांश्चान्यान्हन्यां साश्वरथद्विपान् ॥ २८ ॥
वीरमादाय तं साम्बं सपत्नीकं ततः पुरीम् ।
द्वारकामुग्रसेनादीन्गत्वा द्रक्ष्यामि बान्धवान् ॥ २९ ॥
अथवा कौरवादीनां समस्तैः कुरुभिः सह ।
भारावतरणे शीघ्रं देवराजेन चोदितः ॥ ३० ॥
भागीरथ्यां क्षिपाम्याशु नगरं नागसाह्वयम् ॥ ३१ ॥

व्यास उवाच ।

इत्युक्त्वा क्रोधरक्ताक्षस्तालाङ्कोऽधोमुखं हलम् ।
प्राकारवप्रे विन्यस्य चकर्ष मुशलायुधः ॥ ३२ ॥
आघूर्णितं तत्सहसा ततो वै हस्तिनापुरम् ।
दृष्ट्वा संक्षुब्धहृदयाश्चुक्रुशुः सर्वकौरवाः ॥ ३३ ॥

कौरवा ऊचुः ।

राम राम महाबाहो क्षम्यतां क्षम्यतां त्वया ।
उपसंह्रियतां कोपः प्रसीद मुशलायुध ॥ ३४ ॥
एष साम्बः सपत्नीकस्तव निर्यातितो बल ।
अविज्ञातप्रभावाणां क्षम्यतामपराधिनाम् ॥ ३५ ॥

व्यास उवाच ।

ततो निर्यातयामासुः साम्बं पत्न्या समन्वितम् ।
निष्क्रम्य स्वपुरीं तूर्णं कौरवा मुनिसत्तमाः ॥ ३६ ॥
भीष्मद्रोणकृपादीनां प्रणम्य वदतां प्रियम् ।
क्षान्तमेव मयेत्याह बलो बलवतां वरः ॥ ३७ ॥
अद्याप्याघूर्णिताकारं लक्ष्यते तत्पुरं द्विजाः ।
एष प्रभावो रामस्य बलशौर्यवतो द्विजाः ॥ ३८ ॥
ततस्तु कौरवाः साम्बं संपूज्य हलिना सह ।
प्रेषयामासुरुद्वाहधनभार्यासमन्वितम् ॥ ३९ ॥

इति श्रीमहापुराणे आदिब्राह्मे श्रीकृष्णचरिते बलदेवमाहात्म्यनिरूपणं नामाष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

——

# अथ नवाधिकद्विशततमोऽध्यायः ।

## द्विविदवानरवधवर्णनम्

व्यास उवाच ।

शृणुध्वं मुनयः सर्वे बलस्य बलशालिनः ।
कृतं यदन्यदेवाभूत्तदपि श्रूयतां द्विजाः ॥ १ ॥

नरकस्यासुरेन्द्रस्य देवपक्षविरोधिनः ।
सखाऽभवन्महावीर्यो द्विविदो नाम वानरः ॥ २ ॥
वैरानुबन्धं बलवान्स चकार सुरान्प्रति ॥ ३ ॥

द्विविद उवाच ।

नरकं हतवान्कृष्णो बलदर्पसमन्वितम् ।
करिष्ये सर्वदेवानां तस्माद्देष प्रतिक्रियाम् ॥ ४ ॥

व्यास उवाच ।

यज्ञविध्वंसनं कुर्वन्मर्त्यलोकक्षयं तथा ।
ततो विध्वंसयामास यज्ञानज्ञानमोहितः ॥ ५ ॥
बिभेद साधुमर्यादां क्षयं चक्रे च देहिनाम् ।
ददाह चपलो देशं पुरग्रामान्तराणि च ॥ ६ ॥
क्वचिच्च पर्वतक्षेपाद्ग्रामादीन्समचूर्णयत् ।
शैलानुत्पाट्य तोयेषु मुमोचाम्बुनिधौ तथा ॥ ७ ॥
पुनश्चार्णवमध्यस्थः क्षोभयामास सागरम् ।
तेनातिक्षोभितश्चाब्धिरुद्वेलो जायते द्विजाः ॥ ८ ॥
प्लावयंस्तीरजान्ग्रामान्पुरादीनतिवेगवान् ।
कामरूपं महारूपं कृत्वा सस्यान्यनेकशः ॥ ९ ॥
लुठन्भ्रमणसंमर्दैः संचूर्णयति वानरः ।
तेन विप्रकृतं सर्वं जगदेतद्दुरात्मना ॥ १० ॥
निःस्वाध्यायवषट्कारं द्विजाश्चाऽऽसीत्सुदुःखितम् ।
कदाचिद्रैवतोद्याने पपौ पानं हलायुधः ॥ ११ ॥

रेवती च महाभागा तथैवान्या वरस्त्रियः।
उद्गीयमानो विलसल्ललनामौलिमध्यगः ॥ १२ ॥
रेमे यदुवरश्रेष्ठः कुबेर इव मन्दरे।
ततः स वानरोऽभ्येत्य गृहीत्वा सीरिणो हलम् ॥ १३ ॥
मुशलं च चकारास्य संमुखः स विडम्बनाम्।
तथैव योषितां तासां जहासाभिमुखं कपिः ॥ १४ ॥
पानपूर्णांश्च करकांश्चिक्षेपाऽऽहत्य वै तदा।
ततः कोपपरीतात्मा भर्त्सयामास तं बलम् ॥ १५ ॥
तथाऽपि तमवज्ञाय चक्रे किलकिलाध्वनिम्।
ततः समुत्थाय बलो जगृहे मुशलं रुषा ॥ १६ ॥
सोऽपि शैलशिलां भीमां जग्राह प्लवगोत्तमः।
चिक्षेप च स तां क्षिप्तां मुशलेन सहस्रधा ॥ १७ ॥
बिभेद यादवश्रेष्ठः सा पपात महीतले।
अपतन्मुशलं चासौ समुल्लङ्घ्य प्लवंगमः ॥ १८ ॥
वेगेनाऽऽयम्य रोषेण बलेनोरस्यताडयत्।
ततो बलेन कोपेन मुष्टिना मूर्ध्नि ताडितः ॥ १९ ॥
पपात रुधिरोद्गारी द्विविदः क्षीणजीवितः।
पतता तच्छरीरेण गिरेः शृङ्गमशीर्यत ॥ २० ॥
मुनयः शतधा वज्रिवज्रेणेव हि ताडितम्।
पुष्पवृष्टिं ततो देवा रामस्योपरि चिक्षिपुः ॥ २१ ॥
प्रशशंसुस्तदाऽभ्येत्य साध्वेतत्ते महत्कृतम्।
अनेन दुष्टकपिना दैत्यपक्षोपकारिणा ॥
जगन्निराकृतं वीर दिष्ट्या स क्षयमागतः ॥ २२ ॥

व्यास उवाच ।

एवंविधान्यनेकानि बलदेवस्य धीमतः ।
कर्माण्यपरिमेयानि शेषस्य धरणीभृतः ॥ २३ ॥

इति श्रीमहापुराणे आदिब्राह्मे बलदेवमाहात्म्ये द्विविदवानर-वधवर्णनं नाम नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

——

# अथ दशाधिकद्विशततमोऽध्यायः ।

## भूमिभारावतरणकथनम्

व्यास उवाच ।

एवं दैत्यवधं कृष्णो बलदेवसहायवान् ।
चक्रे दुष्टक्षितीशानां तथैव जगतः कृते ॥ १ ॥
क्षितेश्च भारं भगवान्फाल्गुनेन समं विभुः ।
अवतारयामास हरिः समस्ताक्षौहिणीवधात् ॥ २ ॥
कृत्वा भारावतरणं भुवो हत्वाऽखिलान्नृपान् ।
शापव्याजेन विप्राणामुपसंहृतवान्कुलम् ॥ ३ ॥
उत्सृज्य द्वारकां कृष्णस्त्यक्त्वा मानुष्यमात्मभूः ।
स्वांशो विष्णुमयं स्थानं प्रविवेश पुनर्निजम् ॥ ४ ॥

मुनय ऊचुः ।

स विप्रशापव्याजेन संजह्रे स्वकुलं कथम् ।
कथं च मानुषं देहमुत्ससर्ज जनार्दनः ॥ ५ ॥

व्यास उवाच ।

विश्वामित्रस्तथा कण्वो नारदश्च महामुनिः ।
पिण्डारके महातीर्थे दृष्टा यदुकुमारकैः ॥ ६ ॥
ततस्ते यौवनोन्मत्ता भाविकार्यप्रचोदिताः ।
साम्बं जाम्बवतीपुत्रं भूषयित्वा स्त्रियं यथा ॥
प्रसृतास्तान्मुनीनूचुः प्रणिपातपुरःसरम् ॥ ७ ॥

कुमारा ऊचुः ।

इयं स्त्री पुत्रकामा तु प्रभो किं जनयिष्यति ॥ ८ ॥

व्यास उवाच ।

दिव्यज्ञानोपपन्नास्ते विप्रलब्धा कुमारकैः ।
शापं ददुस्तदा विप्रास्तेषां नाशाय सुव्रताः ॥ ९ ॥
मुनयः कुपिताः प्रोचुर्मुशलं जनयिष्यति ।
येनाखिलकुलोत्सादो यादवानां भविष्यति ॥ १० ॥
इत्युक्तास्तैः कुमारास्त आचचक्षुर्यथातथम् ।
उग्रसेनाय मुशलं जज्ञे साम्बस्य चोदरात् ॥ ११ ॥
तदुग्रसेनो मुशलमयश्चूर्णमकारयत् ।
जज्ञे तच्चैरका चूर्णं प्रक्षिप्तं वै महोदधौ ॥ १२ ॥
मुसलस्याथ लौहस्य चूर्णितस्यान्धकैर्द्विजाः ।
खण्डं चूर्णयितुं शेकुर्नैव ते तोमराकृति ॥ १३ ॥
तदप्यम्बुनिधौ क्षिप्तं मत्स्यो जग्राह जालिभिः ।
घातितस्योदरात्तस्य लुब्धो जग्राह तज्जरा ॥ १४ ॥

विज्ञातपरमार्थोऽपि भगवान्मधुसूदनः ।
नैच्छत्तदन्यथा कर्तुं विधिना यत्समाहृतम् ॥ १५ ॥
देवैश्च प्रहितो दूतः प्रणिपत्याऽऽह केशवम् ।
रहस्येवमहं दूतः प्रहितो भगवन्सुरैः ॥ १६ ॥
वस्वश्विमरुदादित्यरुद्रसाध्यादिभिः सह ।
विज्ञापयति वः शक्रस्तदिदं श्रूयतां प्रभो ॥ १७ ॥

देवा ऊचुः ।

भारावतरणार्थाय वर्षाणामधिकं शतम् ।
भगवानवतीर्णोऽत्र त्रिदशैः संप्रसादितः ॥ १८ ॥
दुर्वृत्ता निहता दैत्या भुवो भारोऽवतारितः ।
त्वया सनाथास्त्रिदशा व्रजन्तु त्रिदिवेशताम् ॥ १९ ॥
तदतीतं जगन्नाथ वर्षाणामधिकं शतम् ।
इदानीं गम्यतां स्वर्गो भवता यदि रोचते ॥ २० ॥
देवैर्विज्ञापितो देवोऽप्यथात्रैव रतिस्तव ।
तत्स्थीयतां यथाकालमाख्येयमनुजीविभिः ॥ २१ ॥

श्रीभगवानुवाच ।

यत्त्वमात्थाखिलं दूत वेद्मि चैतदहं पुनः ।
प्रारब्ध एव हि मया यादवानामपि क्षयः ॥ २२ ॥
भुवो नामातिभाराऽयं यादवैरनिबर्हितैः ।
अवतारं करोम्यस्य सप्तरात्रेण सत्वरः ॥ २३ ॥
यथागृहीतं चाम्भोधौ हृत्वाऽहं द्वारकां पुनः ।
यादवानुपसंहृत्य यास्यामि त्रिदशालयम् ॥ २४ ॥

मनुष्यदेहमुत्सृज्य संकर्षणसहायवान् ।
प्राप्त एवास्मि मन्तव्यो देवेन्द्रेण तथा सुरैः ॥ २५ ॥
जरासंधादयो येऽन्ये निहता भारहेतवः ।
क्षितेस्तेभ्यः स भारो हि यदूनां समधीयत ॥ २६ ॥
तदेतत्सुमहाभारमवतार्य क्षितेरहम् ।
यास्याम्यमरलोकस्य पालनाय ब्रवीहि तान् ॥ २७ ॥

व्यास उवाच ।

इत्युक्तो वासुदेवेन देवदूतः प्रणम्य तम् ।
द्विजाः स दिव्यया गत्या देवराजान्तिकं ययौ ॥ २८ ॥
भगवानप्यथोत्पातान्दिव्यान्भौमान्तरिक्षगान् ।
ददर्श द्वारकापुर्यां विनाशाय दिवानिशम् ॥ २६ ॥
तान्दृष्ट्वा यादवानाह पश्यध्वमतिदारुणान् ।
महोत्पाताञ्शमायैषां प्रभासं याम मा चिरम् ॥ ३० ॥

व्यास उवाच ।

महाभागवतः प्राह प्रणिपत्योद्धवो हरिम् ॥ ३१ ॥

उद्धव उवाच ।

भगवन्यन्मया कार्यं तदाज्ञापय सांप्रतम् ।
मन्ये कुलमिदं सर्वं भगवान्संहरिष्यति ॥
नाशायास्य निमित्तानि कुलस्याच्युत लक्षये ॥ ३२ ॥

श्रीभगवानुवाच ।

गच्छ त्वं दिव्यया गत्या मत्प्रसादसमुत्थया ।
बदरीमाश्रमं पुण्यं गन्धमादनपर्वते ॥ ३३ ॥

नरनारायणस्थाने पवित्रितमहीतले ।
मन्मना मत्प्रसादेन तत्र सिद्धिमवाप्स्यसि ॥ ३४ ॥
अहं स्वर्गं गमिष्यामि उपसंहृत्य वै कुलम् ।
द्वारकां च मया त्यक्तां समुद्रः प्लावयिष्यति ॥ ३५ ॥

व्यास उवाच ।

इत्युक्तः प्रणिपत्यैनं जगाम स तदोद्धवः ।
नरनारायणस्थानं केशवेनानुमोदितः ॥ ३६ ॥
ततस्ते यादवाः सर्वे रथानारुह्य शीघ्रगान् ।
प्रभासं प्रययुः सार्धं कृष्णरामादिभिर्द्विजाः ॥ ३७ ॥
प्राप्य प्रभासं प्रयता प्रीतास्ते कुक्कुरान्धकाः ।
चक्रुस्तत्र सुरापानं वासुदेवानुमोदिताः ॥ ३८ ॥
पिवतां तत्र वै तेषां संघर्षेण परस्परम् ।
यादवानां ततो जज्ञे कलहाग्निः क्षयावहः ॥ ३९ ॥
जघ्नुः परस्परं ते तु शस्त्रैर्दैवबलात्कृताः ।
क्षीणशस्त्रास्तु जगृहुः प्रत्यासन्नामथैरकाम् ॥ ४० ॥
एरका तु गृहीता तैर्वज्रभूतेव लक्ष्यते ।
तया परस्परं जघ्नुः संप्रहारैः सुदारुणैः ॥ ४१ ॥
प्रद्युम्नसाम्बप्रमुखाः कृतवर्माऽथ सात्यकिः ।
अनिरुद्धादयश्चान्ये पृथुर्विपृथुरेव च ॥ ४२ ॥
चारुवर्मा सुचारुश्च तथाऽक्रूरादयो द्विजाः ।
एरकारूपिभिर्वज्रैस्ते निजघ्नुः परस्परम् ॥ ४३ ॥
निवारयामास हरिर्यादवास्ते च केशवम् ।
सहायं मेनिरे प्राप्तं ते निजघ्नुः परस्परम् ॥ ४४ ॥

कृष्णोऽपि कुपितस्तेषामेरकामुष्टिमाददे ।
वधाय तेषां मुशलं मुष्टिलोहमभूत्तदा ॥ ४५ ॥
जघान तेन निःशेषानाततायी स यादवान् ।
जघ्नुश्च सहसाऽभ्येत्य तथाऽन्ये तु परस्परम् ॥ ४६ ॥
ततश्चार्णवमध्येन जैत्रोऽसौ चक्रिणो रथः ।
पश्यतो दारुकस्याऽऽशु हृतोऽश्वैर्द्विजसत्तमाः ॥ ४७ ॥
चक्रं गदा तथा शार्ङ्गं तूणौ शङ्खोऽसिरेव च ।
प्रदक्षिणं ततः कृत्वा जग्मुरादित्यवर्त्मना ॥ ४८ ॥
क्षणमात्रेण वै तत्र यादवानामभूत्क्षयः ।
ऋते कृष्णं महाबाहुं दारुकं च द्विजोत्तमाः ॥ ४९॥
चङ्क्रम्यमाणौ तौ रामं वृक्षमूलकृतासनम् ।
ददृशाते मुखाच्चास्य निष्क्रामन्तं महोरगम् ॥ ५० ॥
निष्क्रम्य स मुखात्तस्य महाभोगो भुजंगमः ।
प्रयातश्चार्णवं सिद्धैः पूज्यमानस्तथोरगैः ॥ ५१ ॥
तमर्घ्यमादाय तदा जलधिः संमुखं ययौ ।
प्रविवेश च तत्तोयं पूजितः पन्नगोत्तमैः ॥
दृष्ट्वा बलस्य निर्याणं दारुकं प्राह केशवः ॥ ५२ ॥

श्रीभगवानुवाच ।

इदं सर्वं त्वमाचक्ष्व वसुदेवोग्रसेनयोः ।
निर्याणं बलदेवस्य यादवानां तथा क्षयम् ॥ ५३ ॥
योगे स्थित्वाऽहमप्येतत्परित्यज्य कलेवरम् ।
वाच्यश्च द्वारकावासी जनः सर्वस्तथाऽऽहुकः ॥ ५४ ॥

यथेमां नगरीं सर्वां समुद्रः प्लावयिष्यति ।
तस्माद्रथैः सुसज्जैस्तु प्रतीक्ष्यो ह्यर्जनागमः ॥ ५५ ॥
न स्थेयं द्वारकामध्ये निष्क्रान्ते तत्र पाण्डवे ।
तेनैव सह गन्तव्यं यत्र याति स कौरवः ॥ ५६ ॥
गत्वा च ब्रूहि कौन्तेयमर्जुनं वचनं मम ।
पालनीयस्त्वया शक्त्या जनोऽयं मत्परिग्रहः ॥ ५७ ॥
इत्यर्जुनेन सहितो द्वारवत्यां भवाञ्जनम् ।
गृहीत्वा यातु वज्रश्च यदुराजो भविष्यति ॥ ५८ ॥

इति श्रीमहापुराणे आदिब्राह्मे श्रीकृष्णचरिते श्रीकृष्णनिजधामगमननिरूपणं नाम दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

---

# अथैकादशाधिकद्विशततमोऽध्यायः ।

## कृष्णमानुषोत्सर्गकथनम्

व्यास उवाच ।

इत्युक्तो दारुकः कृष्णं प्रणिपत्य पुनः पुनः ।
प्रदक्षिणं च बहुशः कृत्वा प्रायाद्यथोदितम् ॥ १ ॥

स च गत्वा तथा चक्रे द्वारकायां तथाऽऽर्जुनम् ।
आनिनाय महाबुद्धि वज्रं चक्रे तथा नृपम् ॥ २ ॥
भगवानपि गोविन्दो वासुदेवात्मकं परम् ।
ब्रह्मात्मनि समारोप्य सर्वभूतेष्वधारयत् ॥ ३ ॥
स मानयन्द्विजवचो दुर्वासा यदुवाच ह ।
योगयुक्तोऽभवत्पादं कृत्वा जानुनि सत्तमाः ॥ ४ ॥
संप्राप्तो वै जरा नाम तदा तत्र स लुब्धकः ।
मुशलशेषलोहस्य सायकं धारयन्परम् ॥ ५ ॥
स तत्पादं मृगाकारं समवेक्ष्य व्यवस्थितः ।
ततो विव्याध तेनैव तोमरेण द्विजोत्तमाः ॥ ६ ॥
गतश्च ददृशे तत्र चतुर्बाहुधरं नरम् ।
प्रणिपत्याऽऽह चैवैनं प्रसीदेति पुनः पुनः ॥ ७ ॥
अजानता कृतमिदं मया हरिणशङ्कया ।
क्षम्यतामात्मपापेन दग्धं मा दग्धुमर्हसि ॥ ८ ॥

व्यास उवाच

ततस्तं भगवानाह नास्ति ते भयमण्वपि ।
गच्छ त्वं मत्प्रसादेन लुब्ध स्वर्गेश्वरास्पदम् ॥ ९ ॥

व्यास उवाच ।

विमानमागतं सद्यस्तद्वाक्यसमनन्तरम् ।
आरुह्य प्रययौ स्वर्गं लुब्धकस्तत्प्रसादतः ॥ १० ॥

यथेमां नगरीं सर्वां समुद्रः प्लावयिष्यति ।
तस्माद्रथैः सुसज्जैस्तु प्रतीक्ष्यो ह्यर्जनागमः ॥ ५५ ॥
न स्थेयं द्वारकामध्ये निष्क्रान्ते तत्र पाण्डवे ।
तेनैव सह गन्तव्यं यत्र याति स कौरवः ॥ ५६ ॥
गत्वा च ब्रूहि कौन्तेयमर्जुनं वचनं मम ।
पालनीयस्त्वया शक्त्या जनोऽयं मत्परिग्रहः ॥ ५७ ॥
इत्यर्जुनेन सहितो द्वारवत्यां भवाञ्जनम् ।
गृहीत्वा यातु वज्रश्च यदुराजो भविष्यति ॥ ५८ ॥

इति श्रीमहापुराणे आदिब्राह्मे श्रीकृष्णचरिते श्रीकृष्णनिजधाम-गमननिरूपणं नाम दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

---

## अथैकादशाधिकद्विशततमोऽध्यायः ।

### कृष्णमानुषोत्सर्गकथनम्

व्यास उवाच ।

इत्युक्तो दारुकः कृष्णं प्रणिपत्य पुनः पुनः ।
प्रदक्षिणं च बहशः कृत्वा प्रायाद्यथोदितम् ॥ १ ॥

स च गत्वा तथा चक्रे द्वारकायां तथाऽऽर्जुनम् ।
आनिनाय महाबुद्धिं वज्रं चक्रे तथा नृपम् ॥ २ ॥
भगवानपि गोविन्दो वासुदेवात्मकं परम् ।
ब्रह्मात्मनि समारोप्य सर्वभूतेष्वधारयत् ॥ ३ ॥
स मानयन्द्विजवचो दुर्वासा यदुवाच ह ।
योगयुक्तोऽभवत्पादं कृत्वा जानुनि सत्तमाः ॥ ४ ॥
संप्राप्तो वै जरा नाम तदा तत्र स लुब्धकः ।
मुशलशेषलोहस्य सायकं धारयन्परम् ॥ ५ ॥
स तत्पादं मृगाकारं समवेक्ष्य व्यवस्थितः ।
ततो विव्याध तेनैव तोमरेण द्विजोत्तमाः ॥ ६ ॥
गतश्च ददृशे तत्र चतुर्बाहुधरं नरम् ।
प्रणिपत्याऽऽह चैवैनं प्रसीदेति पुनः पुनः ॥ ७ ॥
अजानता कृतमिदं मया हरिणशङ्कया ।
क्षम्यतामात्मपापेन दग्धं मा दग्धुमर्हसि ॥ ८ ॥

व्यास उवाच

ततस्तं भगवानाह नास्ति ते भयमण्वपि ।
गच्छ त्वं मत्प्रसादेन लुब्ध स्वर्गेश्वरास्पदम् ॥ ९ ॥

व्यास उवाच ।

विमानमागतं सद्यस्तद्वाक्यसमनन्तरम् ।
आरुह्य प्रययौ स्वर्गं लुब्धकस्तत्प्रसादतः ॥ १० ॥

गते तस्मिन्स भगवान्संयोज्याऽऽत्मानमात्मनि ।
ब्रह्मभूतेऽव्ययेऽचिन्त्ये वासुदेवमयेऽमले ॥ ११ ॥
अजन्मन्यजरेऽनाशिन्यप्रमेयेऽखिलात्मनि ।
त्यक्त्वा स मानुषं देहमवाप त्रिविधां गतिम् ॥ १२ ॥

इति श्रीमहापुराणे आदिब्राह्मे व्यासर्षिसंवादे श्रीकृष्णचरिते कृष्णमानुषोत्सर्गकथनं नामैकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

---

## अथ द्वादशाधिकद्विशततमोऽध्यायः ।

### रुक्मिण्यादीनांपरलोकगमनम्

व्यास उवाच ।

अर्जुनोऽपि तदाऽन्विष्य कृष्णरामकलेवरे ।
संस्कारं लम्भयामास तथाऽन्येषामनुक्रमात् ॥ १ ॥
अष्टौ महिष्यः कथिता रुक्मिणीप्रमुखास्तु याः ।
उपगृह्य हरेर्देहं विविशुस्ता हुताशनम् ॥ २ ॥
रेवती चैव रामस्य देहमाश्लिष्य सत्तमाः ।
विवेश ज्वलितं वह्निं तत्सङ्गाह्लादशीतलम् ॥ ३ ॥

